... Bombay to K. V. [illegible] on 15/9/24

श्रीपुंडरीकविट्ठलविरचितः

# सद्रागचंद्रोदयः ।

Sadraga Chandrodaya



एतत्पुस्तकं

काशीक्षेत्रनिवासिवझटंकेत्युपाह्वगणेशशर्मणा

संशोधितम् ।

तच्च

मुंबय्यां

भालचंद्रशर्मणा

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्रकाशितम्

शालिवाहनशाकः १८३३ सन् १९१२ ।

श्रीपुंडरीकविट्ठलविरचितः

# सद्रागचंद्रोदयः ।



एतत्पुस्तकं

काशीक्षेत्रनिवासिवज्रटंकेत्युपाह्वगणेशशर्मणा संशोधितम् ।

तच्च

मुंबय्यां

## भालचंद्रशर्मणा

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्रकाशितम्

शालिवाहनशाकः १८३३ सन् १९१२ ।

॥ श्रीः ॥

# अथ सद्रागचंद्रोदयः प्रारभ्यते ।



श्रीगणेशाय नमः ।

बह्वाकारैर्विरचितवपुर्योऽखिलस्थानकस्थोऽ
स्तोकं शोकं नुदति नितरां यः श्रुतिश्रामवर्ती ॥
योऽलंकारैरधिकसुभगो रागपूराभिगम्यो
वंदे कालत्रितयमहितं माधवं तं च नादम् ॥ १ ॥

वंशः फारकिभूपतेः सुसरलो भूभारधारक्षमः
श्रीमत्सद्गुणिदानिशूरविमलक्ष्मापालशाखाबिभृत् ॥
विख्यातो भुवि यत्र काव्यरसिकाः सत्कीर्तिवल्लीश्रिता-
श्चित्रं संचरतीति विश्वमखिलं के वर्णयंतीह तत् ॥ २ ॥

तत्राभूदहमद्खाननृपतिर्वीराधिवीरेश्वर-
स्त्वौदार्यादिगुणैः समस्तवसुधाधीशैः सदा राजितः ॥
दृप्यच्छत्रुगणेषु च प्रविलसत्संग्रामशक्तस्तथा
संहर्ताऽविरतं दरिद्रतमसो भूमंडलाखंडलः ॥ ३ ॥

तज्जातस्ताजखानो नरपतितिलकः फारकी वै जयंतो
यंता शूरेश्वराणामरिसुभटघटाटोपजीमूतवातः ॥
जातस्तातः प्रजानां भरणवितरणस्थापनाज्ञाकरेभ्यो
नित्यं दानोर्मिलोलैः सकलगुणनिधी राजते राजसिंधुः॥४॥

तज्जः श्रीबुरहानखानचतुरः कामानुकारी वरः
संगीतादिकलाप्रपूर्णविमलः साहित्यतेजोमयः ॥
दारिद्र्यांधतमश्च यश्च गुणिनां हंताह्युदारैः करै-
र्भूमौ फारकिभूपतीशतिलकश्चंद्रश्चिरं राजते ॥ ५ ॥

प्रस्तावना

श्रीमद्दक्षिणादिङ्मुखस्य तिलके × × निदेशे शुभे
नित्यं भोगवतीव भोगिवसती रम्या सुपर्वादिभिः ॥
अस्ति स्वस्तिकरी नरेंद्रनगरी त्वानंदवल्लीति या
तत्र श्रीबुरहानखाननृपतिः संगीतमाकर्णयत् ॥ ६ ॥
संत्यस्मिन् बहुधा विरोधगतयो लक्ष्ये च लक्ष्मोदिते
जानंतीह सुलक्ष्मपक्षविगतिं केचित्परे लौकिकीम् ॥
तत्कुर्वंतु सुलक्ष्मलक्ष्यसहितं रागप्रकाशं बुधा
इत्युक्ते बुरहानखाननृपतौ विद्वत्सभामंडले ॥ ७ ॥
श्रीमद्भनूमद्भरतार्जुनादिहार्दं समादाय सतां जनानाम् ॥
तमोनिरासाय विलासगत्यै सद्रागचंद्रोदयमातनोमि ॥ ८ ॥
अहो बुधाः पूर्णविधूदयेऽस्मिंस्तमस्वरूपो ग्रहणैकलोलः ॥
क्रूराशयोयस्तदुपांतमेति तथा प्रदध्वं निजलक्ष्यमत्र ॥ ९ ॥
लक्ष्यप्रधानं खलु शास्त्रमेतन्निशंकदेवोऽपि तदेव वष्टि ॥
यल्लक्ष्म लक्ष्यप्रतिबंधकं स्यात् तदन्यथा नेयमिति ब्रुवाणः ॥१०॥
अत्र प्रसादत्रितयं प्रयुक्तं स्वरप्रसादः प्रथमस्तु तत्र ॥
द्वितीयकः स्यात्स्वरमेलनामा तृतीय आलप्तिगतः प्रसादः ॥११॥
तत्रादिमे नादसमुद्भवश्च तत्स्थानकानि श्रुतयः स्वराश्च ॥
विकारभेदा अथ वादिमुख्या ग्रामत्रयं चाऽपि च मूर्छनाश्च ॥१२॥
तानाश्च तत्प्रस्तरणं च संख्या नष्टं तथोद्दिष्टमथ ग्रहाद्याः ॥
वर्णस्तथाऽलंकरणं क्रमेण वक्ष्यंत एतानि ततो द्वितीये ॥१३॥
वीणाप्रशंसामथ वीणिकायां तंत्रीः सषड्जादिकसारिकास्थाम् ॥
मेलेषु च प्रस्तरणप्रकारसंख्यां कियन्मेलकलक्षणानि ॥ १४ ॥
तेभ्यः पृथग्रागजानिं च रागलक्ष्माणि वक्ष्यामि तथा तृतीये ॥
आलप्तिकाद्यं गमकोक्तिपूर्वं कियत्सु रागेष्वपि वादनानि ॥१५॥
स्वरादिकं नादसमुद्भवं स्यान्नादं ततस्तावदुदीरयामि ॥
युज्येत चात्मा मनसा विवक्षुर्मनोऽग्निनाऽग्निस्त्वनिलेश्वरेण ॥१६॥

ब्रह्मादिमग्रंथिस्थितः स मुख्यः प्राणः क्रमेणोर्ध्वगतिं दधानः ॥
नाभौ तथा हृद्यथ कंठदेशे मूर्ध्न्यानने ध्वानमुपाकरोति ॥ १७ ॥
नाभ्यादिपंचाश्रयगोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टश्च तथातिपुष्टः ॥
सुकृत्रिमश्चेति भिदाः क्रमेण नदस्य शब्दे घञि नाद उक्तः ॥१८॥
हृत्कंठमूर्धाश्रयगः क्रमेण त्रैविध्यमृष्येद्व्यवहारतोऽयम् ॥
मंद्रश्च मध्याव्हयकश्च तारः पूर्वात्परः स्याद्द्विगुणः क्रमेण ॥१९॥
ऊर्ध्वस्थितायां हृदि नाडिकायां नाड्यस्तिरश्च्यः पवनाहतास्ताः ॥
द्वाविंशतिस्तीक्ष्णतराः क्रमेण नादं तु तावच्छ्रुतितां नयंति॥२०॥
कंठप्रदेशेऽप्यथ मूर्धदेशे द्वाविंशतिः स्युः श्रुतयस्तथैव ॥
स्वराः श्रुतिभ्यः प्रभवंति ते तु षड्जादयः सप्त यथाक्रमेण ॥२१॥
वेदाऽग्निपक्षाऽब्धिपयोधिवन्हिपक्षांतिमश्रुत्यधिसंश्रिताः स्युः॥
षड्जाभिधानस्त्वृषभस्ततः स्याद्गांधारको मध्यमपंचमौ च ॥२२॥
ततः परं धैवतको निषाद इति स्वराः सप्त मता मुनींद्रैः ॥
सरी गमौ पश्च धनी क्रमेणेत्येषां स्वराणामभिधाः पराः स्युः॥२३॥
श्रुतेश्च नैरंतरभाविको यः स्निग्धोऽनुशब्दात्मक ओजसात्मा ॥
श्रोतुर्मनोरंजनकारकत्वात्स्वतस्तु तज्ज्ञैरुदितः स्वरोऽसौ ॥ २४ ॥
क्रमान्मयूराव्हयचातकाजक्रौंचाभिधाः कोकिलदर्दुराख्यौ ॥
मतंगजश्चामलमुद्धरंति षड्जादिकानित्युदितं मुनींद्रैः ॥ २५ ॥
शुद्धाः स्वरा ये तु भवंति सप्त तज्जान्विकारान्प्रवदामि सप्त ॥
स्वोपांतिकश्रुत्यधिसंश्रितः स्यात् षड्जाभिधानो लघुषड्जनामा ॥२६॥
एवं मपौ स्तो लघुशब्दपूर्वौ साधारणो गः प्रथमश्रुतिस्थः ॥
मस्य द्वितीयश्रुतिगोंऽतरः स्यात् षड्जाव्हयस्य प्रथमश्रुतिस्थः ॥२७॥
तथा द्वितीयश्रुतिवर्तमानो निःकैशिकी काकलिनामधेयः ॥
स्वस्थानकस्थेषु च तेषु नेष्टाः स्वरेषु भेदा विकृता मुनींद्रैः ॥२८॥
नोपाददे धस्य विकारभेदं निशंकसूरिः खलु कूटताने ॥
सर्वे युतास्ते विकृताश्च शुद्धाश्चतुर्दशैवेति मतं मदीयम् ॥२९॥

अथो रिधावाद्यगनिश्रुतिस्थौ लक्ष्येषु वेदश्रुतिकौ भवेताम् ॥
मः पंचमाद्यां श्रुतिमेत्य लक्ष्ये क्वचिच्च पंचश्रुतितां प्रयाति ॥ ३० ॥
चतुर्दशानां गदितस्वराणां कियत्सु रागेषु भवेयुरेते ॥
ननु स्वरस्य श्रुतितः पृथक्त्वं त्वया यदुक्तं न तथाऽत्र युक्तम् ॥३१॥
साद्यश्रुतेः कैशिकिनेश्च भेदः कुतस्तथाऽन्यश्रुतितः स्वराणाम् ॥
यथेश्वरप्रेरितवातचक्रघातात्प्रभूतध्वनिरेव नाड्याम् ॥ ३२ ॥
प्राग्घातमात्रश्रवणाच्छ्रुतिश्चानुध्वानरूपः स्वर इत्यकिंचित् ॥
यैर्जातयः पंच मताः श्रुतीनां ते तु प्रमाणं प्रवदंति तत्र ॥ ३३ ॥
चतुर्विधास्ते तु भवंति साद्या वादी च संवादिविवादिनौ च ॥
तथानुवादीति मताः स वादी स्वरः प्रयोगे बहुलत्वमेति ॥ ३४ ॥
यदंतरेऽष्टश्रुतयो द्विषड्वा संवादिनौ तौ ननिमावथश्च ॥
एकश्रुतेरंतरितौ स्वरौ यौ विवादिनौ तौ तु मिथः सदा स्तः ॥ ३५ ॥
शेषस्वराणामनुवादिता स्यादन्वर्थनामान इमे भवेयुः ॥
ग्रामः स्वराणां गदितः समूहो यो मूर्छनाद्याश्रयतां प्रपन्नः ॥ ३६ ॥
षड्जः स्वराणां जनको यतः स्याद्ग्रामस्ततो मुख्यतयैव एषः ॥
रागेषु सग्रामजनित्वमेव दृष्टं ततो ग्रामयुगं नहीष्टम् ॥ ३७ ॥
आरोहणं च क्रमतोऽवरोहः सप्तस्वराणामिति मूर्छनोक्ता ॥
ताः सप्त मध्यस्थितषड्जपंक्तावधस्तनैर्न्यादिभिरेव तत्र ॥ ३८ ॥
संसारणीयास्तु यथाक्रमेण षड्जादिकाद्याः पुरतो भवेयुः ॥
यां मूर्छनां यावतिथश्च षड्जः श्रयेद्धि सा तावतिथत्वमेति ॥ ३९ ॥
षड्जादिमा तूत्तरमंद्रिकाद्या निषादपूर्वा रजनी द्वितीया ॥
धाद्युत्तराद्यायतिका तृतीया तुर्या च पूर्वापिच शुद्धषड्जा ॥४० ॥
मादिस्तथा पंचममूर्छना तु नाम्ना कृतामत्सरिपूर्विकेति ॥
गादिस्तु षष्ठी गदितेति नाम्नाऽश्वक्रांतिका याद्यभिरुद्गतांत्या ॥४१॥
ता मूर्छनाः षाडवितीकृताश्च क्वचित्तथैवौडवितीकृताः स्युः ॥
ताः शुद्धतानाः कथिता मुनींद्रैः सर्वेषु रागेषु विचारणीयाः॥४२॥

तानस्य तंत्र्यां द्विविधा क्रिया स्यात्प्रवेशतो निग्रहतस्तथैव ॥
पूर्वप्रकर्षोत्तरमार्दवस्तु प्रवेशकोऽस्पर्शकनिग्रहः स्यात् ॥ ४३ ॥
इति प्रगीता भरतादिभिश्च गीतोपयोगात्किल मूर्छनास्तु ॥
ता व्युत्क्रमोच्चारयुतस्वरास्तु पूर्णा अपूर्णा अपि कूटतानाः ॥ ४४ ॥
न्यस्य क्रमं स्थापय पूर्वपूर्वस्वरं पराधः स यदाग्रवर्ती ॥
तत्पूर्वमस्योपरिगान्पुरः प्राङ्मूलक्रमस्य क्रमतस्तु शेषान् ॥ ४५ ॥
एकादिकांकान्विलिखेत्तु सप्त पूर्वेण पूर्वेण परे परेऽत्र ॥
हते क्रमेण प्रतिमूर्छनंस्यात्संख्या तदेकस्वरपूर्वकाणाम् ॥ ४६ ॥
ये मूर्छनांत्यस्वरसंस्थितांकास्तान् पातयेत्प्रश्नसमुत्थितांकैः ॥
शेषान् यथार्हं हननप्रपञ्चैः पूर्वस्वरांकैश्च यथाक्रमेण ॥ ४७ ॥
येनाहतिस्तावतिथः स्वरः स्याद्धतेरभावेऽगणनीयलब्धिः ॥
प्रोक्तं द्वितीयाद्गणनं तथैव श्रीविठ्ठलोऽभाषत नष्टसिद्धिम् ॥ ४८ ॥
गीतादिवर्ती ग्रह ईरितश्च स्वरः प्रयोगे बहुलोंऽशनामा ॥
विदारिकायाश्च समापको योऽपन्यासनामाभिध ईरितोऽसौ ॥ ४९ ॥
विच्छिद्य विच्छिद्य कृतः प्रयोगो यः स्याद्विदारीत्युपगीयते च ॥
न्यासः स गीतस्य समाप्तिकृत्स्यादेते तु सर्वत्र भवंति रागे ॥ ५० ॥
सर्वत्र षड्जो ग्रह एव रागे रक्त्यैकहेतोर्निधपादयो ये ॥
वर्णाः प्रयोज्या न तु ते स्वराश्च ता मूर्छनाः षड्जभवा ह्यशेषाः ॥५१॥
गानक्रिया वर्ण इति प्रदिष्टो बुधैर्भवेदेष चतुर्विधस्तु ॥
स्थायी तथाऽऽरोह्यवरोहिणौच संचारिनामेत्यथ लक्ष्म वक्ष्ये ॥५२॥
एकस्वरस्यैव कृतः प्रयोगो विश्रम्य विश्रम्य भवेत्स आद्यः ॥
वर्णौ द्वितीयोऽथ तृतीयकः स्तोऽन्वर्थाभिधौ मिश्रणतश्चतुर्थः ॥ ५३ ॥
विशिष्टवर्णौघ उदीर्यते चालंकारकस्तत्र च रूपभेदाः ॥
नोदीरिता विस्तरशंकितेन कतिप्रसिद्धानभिवर्णयामि ॥ ५४ ॥
स्यादादिमांत्यस्वर एक एव येषाममी स्थायिनि संस्थितास्ते ॥
प्रसन्नपूर्वोऽतगतप्रसन्नः प्रसन्नपूर्वांतकनामधेयः ॥ ५५ ॥

प्रसन्नमध्यः क्रमरेचिताख्यः पंचेत्यमी स्थायिनि संस्थिताः स्युः ॥
यो मूर्छनायां प्रथमस्वरस्तु मंद्रोऽधिकारेऽत्र निरूपितोऽसौ॥५६॥
तारस्तु मंद्राद्द्विगुणः प्रयुक्तो मध्यस्तु यस्तद्द्वयमध्यगो वा ॥
मंद्रः प्रसन्नो मृदुनामधेयस्तारस्तु दीप्तोऽथ लिपौ खमूर्धा॥५७॥
मंद्रस्तु तारः स्थिरऊर्ध्वरेषस्तथा त्रिरुक्तैः प्लुतनामधेयः ॥
मंद्रद्वयाद्दीप्तपुरःस्थिते तु प्रसन्नपूर्वं प्रवदंति तज्ज्ञाः ॥ ५८ ॥
तद्वैपरीत्येंऽतगतप्रसन्नः प्रसन्नयोर्मध्यगते तु तारे ॥
प्रसन्नपूर्वांतकनामधेयोऽलंकारकोऽसौ मुनिनोपदिष्टः ॥ ५९ ॥
मंद्रे तु मध्यद्वयमध्ययाते प्रसन्नमध्यं प्रवदंति धीराः ॥
स्यान्मूर्छनायाः प्रथमस्वरश्चेदंतद्द्वितीयोऽपि तदा कलैका ॥६०॥
द्वितीयतुर्यावथ मध्यगौ चेत्तदा द्वितीया कथिता कलैषा ॥
अंतर्यदा पंचममुख्यकाः स्युस्त्रयस्तृतीया तु कला तदा स्यात् ॥
कलात्रयेणेति बुधैः प्रगीतोऽलंकारकोऽयं क्रमरेचिताख्यः ॥६१॥

इति स्थायिगतालंकाराः ।

विस्तीर्णनामा त्वथ संनिकर्षः प्रेंखाख्यविंदू हसिताभिधानः ।
प्रच्छादनाक्षिप्तकनामधेयावारोहिगाः सप्त मता मुनींद्रैः ॥६२॥
यन्मूर्छनादेः स्वरतः क्रमेण विश्रम्य विश्रम्य विलंबवद्भिः ॥
स्वरैर्यदारोहणमादधाति विस्तीर्णनामाभिहितस्तदाऽयम् ॥६३॥
ह्रस्वैः स्वरैर्द्विर्द्विरुदीरितैश्च निरंतरैः संनिपदादिकर्षः ॥
यत्र स्वरद्वंद्वमुदीर्य पूर्वपूर्वोपयुक्तं स्वरमग्रसंस्थम् ॥ ६४ ॥
आंदोल्यमानं च यथाक्रमेणारोहेदसौ प्रेंखकनामधेयः ॥
प्लुतं तथा ह्रस्वमपि प्लुतं च ह्रस्वं प्लुतं ह्रस्वमथ प्लुतं च ॥ ६५ ॥
कुर्वन् स्वरं याति यथाक्रमेणारोहेत्तदा विंदुरुदीर्यतेऽसौ ॥
स्वरेषु चैकोत्तरवर्धिताभिरावृत्तिभिर्यर्हि समीरितेषु ॥ ६६ ॥
आधत्त आरोहमनुक्रमेण धीरास्तदाहुर्हसिताभिधानम् ॥
स्यात् त्रिस्वराद्या तु कला तथान्ये द्वे पूर्वपूर्वांतिकपूर्विके स्तः॥६७॥

त्रित्रिस्वरे यत्र कले स सद्भिः प्रच्छादनाख्यः कथितस्तदानीम् ॥
एकांतरोच्चारयुतस्वरेषु पूर्वान्वितत्वेन पुरःस्थितस्य ॥ ६८ ॥
आरोहणं स्यात्तु यथाक्रमेण यदा तदाक्षिप्तक उच्यतेऽसौ ॥
आरोहणे लक्षितसप्तभेदा विलोमकेऽपि क्रमतो भवेयुः ॥ ६९ ॥

इत्यारोह्यवरोह्यलंकाराः ।

प्रसादकः प्रेक्षकरंजिताख्यावुत्क्षेपनामा परिवर्तकश्च ॥
निष्कूजितोद्वाहितरेचिताख्या हुंकारकाख्यो ललितक्रमश्च॥७०॥
श्येनस्ततो ह्लादपदादिमानः संचारिगाश्चाग्निहिमांशुसंख्याः ॥
चेत्पूर्वपूर्वः क्रियते स्वरस्य परस्य चोर्ध्वाधरतः प्रसादः ॥७१॥
गतागतं संदधती कला चेत्सा द्विस्वरैकैकविवर्जितेन ॥
भवेयुरन्याश्च कलास्तदानीं प्रेक्षाव्हयोऽसौ कथितः कवींद्रैः॥७२॥
द्विरुक्तमंद्रांतकला तथैव मंद्रादितोऽन्या यदि रंजितः स्यात् ॥
चेत्पूर्वपूर्वन्यसनोर्ध्वलंभस्तु क्षेपकस्त्रिस्वरवत्कलासु ॥ ७३ ॥
गीत्वा प्रसादस्य कलां कलादेस्तृतीयमेत्यादिमगानतः स्युः ॥
यदा तदा लोकमनोभिरामं निष्कूजिताख्यं प्रवदंति धीराः॥७४॥
गीत्वा स्वरांस्त्रीनवरुह्य चैकं पराः कला यत्र भवंति गीताः ॥
एकैकरिक्ता विहितः स एषोऽलंकार उद्वाहितनामधेयः ॥७५॥
चेद्द्विस्वरी पूर्वकला भवेयुः पूर्वेण चैकोत्तरवर्धमानैः ॥
स्वरैर्गतिं चागतिमादधानैर्हुंकारनामा कथितस्तदाऽयम् ॥७६॥
प्रयुज्य मंद्रादिकलां द्विरुक्तपरस्वरेणोपगताममीषु ॥
स्वरेषु दध्यादवरोहणं चेत्तदा मतोऽसौ स्खलिताभिधानः॥७७॥
पक्षत्रिवेदस्वरवत्कलाश्चेत्क्रमेण तिस्रः प्रथमस्वराद्याः ॥
तथा द्वितीयादिकपूर्विकाः स्युर्भवेत्तदैष क्रमनामधेयः ॥ ७८ ॥
स्वरैः सपूर्वैश्च यथाक्रमेण श्येनस्तु संवादियुग्मकैः स्यात् ॥
मंद्रांतमंद्रादिकलास्तु यत्र स ह्लादमानाव्हयकः प्रणीतः ॥७९॥
संचार्यलंकारगणः प्रयुक्त आरोहतः सोऽप्यवरोहतः स्यात् ॥

२

बालप्रबोधाय कियत्प्रणीता बुधैर्यथेष्टं परिकल्पनीयाः ॥ ८० ॥
ज्ञानं स्वराणामथ रक्तिलाभो वर्णांगवैचित्र्यमलंकृतेः स्युः॥८१॥

श्रुतिकलितसुनादस्थानसर्वस्वराणां
विमलतरसुवर्णालंकृतीनां च भेदम् ॥
भुविसुजननिवासग्रामतानादिकानां
नृपवरबुरहानेनात्र निर्णीतमेव ॥ ८२ ॥

इति श्रीकर्णाटजातीयपुंडरीकविठ्ठलविरचिते सद्रागचंद्रोदये
स्वरप्रसादः समाप्तः ।

## अथ वीणाप्रकरणम्

अथ स्वरा येऽत्र मताश्च भेदा ग्रहादयो वर्णगता विशेषाः ॥
वीणाश्रया व्यक्तिरतो ह्यमीषां वीणास्वरूपं प्रतिपादयामि ॥१॥
दंडे रमेशोऽत्र तदीयभार्या तंत्र्यां महेशः ककुभेऽप्युमा स्यात् ॥
पत्र्यां तु तुंबे कथितो विधाता नाभौ सरस्वत्यपि दोरके तु॥२॥
नागेश्वरः शीतकरश्च जीवे सार्यां प्रदिष्टो दिवसाधिनाथः ॥
तथाऽश्विनौ कीलयुगे तु मेरौ देवाधिपो देवमयीति वीणा॥३॥
नरं महापातकिनं पुनाति दृष्टा तदा हस्तगता पुनः किम् ॥
यस्मात् कपालिप्रियतां प्रपन्ना तद्रुद्रवीणां कथयंति संतः ॥४॥
श्रुतिस्मृतिभ्यां प्रतिपादिता या करे कृता ब्रह्मसुतादिभिश्च ॥
वीणा चतुर्वर्गनिदानभूता तत्त्वेन वेद्या कविभिः प्रयत्नात् ॥५॥
विशुद्धमेलाव्हयिका च मध्यमेलाभिधाना द्विविधेति वीणा ॥
समंत्रिषड्जो यदि पूर्वसंस्थो वीणोर्ध्वगासुक्तकतंत्रिकासु ॥६॥
स्याच्छुद्धमेला पमयोश्च तद्वदेकैकमुख्याच्च तु मध्यमेला ॥
प्रत्येकमेते द्विविधे भवेतां स्याद्रागमेलाऽखिलपूर्विकैका ॥ ७ ॥
द्वितीयिकैकोपपदा तथैव तत्र प्रवक्ष्याम्यथ लक्षणानि ॥
स्थानेषु या मंद्रपरादिकेषु स्वरैरशेषैः सहवर्तमाना ॥ ८ ॥

यदा तदा साखिलरागमेलाह्वयोपदिष्टा च चतुर्मुखाद्यैः ॥
एकैकरागप्रतिमेलनं स्यान्मध्ये च तारे तु यदा स्वराणाम् ॥९॥
एषोपगीयेत तदैकरागमेलाभिधा रागविदां वरिष्ठैः ॥
लक्ष्यप्रवीणेन विनिर्मितायां सुवीणिकायामुपरि प्रदेयाः ॥ १० ॥
तंत्र्यश्चतस्रोऽयस एव पार्श्वेऽधो दक्षिणे तिस्र इमा निवेश्याः ॥
पुरोदितानामुपरिस्थितानां वामप्रदेशाश्रितपूर्वतंत्र्याम् ॥ ११ ॥
षड्जं निदध्यादनुमंद्रसंज्ञं द्वितीयतंत्र्यामनुसंद्रपं च ॥
तृतीयतंत्र्यामपि मंद्रषड्जं चतुर्थतंत्र्यामथ मंद्रमाख्यम् ॥ १२ ॥
त्रितंत्रिकाणामधराश्रितानामाद्या तु मध्यस्थितषड्जकेन ॥
तंत्री समानश्रुतिरेषितव्या द्वैतीयिका मंद्रकपेन तद्वत् ॥ १३ ॥
तार्तीयिका मंद्रकषड्जकेन तिस्रो ह्यमूः स्युः श्रुतिनामधेयाः ॥
सारीनिवेशं च निरूपयामि यो वैणिकानामभिसंमतः स्यात्॥१४॥
आद्यानुमंद्राह्वयषड्जतंत्र्या शुद्धो यथा स्यादृषभस्तथाद्या ॥
सारी निवेश्येत तथा द्वितीया तंत्र्या तया शुद्धगसिद्धिहेतोः॥१५॥
सारी तृतीयापि तथैव तंत्र्याधीयेत साधारणगस्य सिध्यै ॥
सारी चतुर्थी लघुमध्यमस्य सिध्यै तया तंत्रिकया तथैव ॥१६॥
तंत्र्या तया पंचमसारिका च निधीयते शुद्धमसाधनाय ॥
सारी निवेश्या च तथैव षष्ठी तंत्र्या तयैवं लघुपाह्वयाय ॥१७॥
अथ त्रितंत्रीभिरनुक्रमेण पराभिरासूदितसारिकासु ॥
स्वरान् प्रभूतानभिवर्णयामि येनानुमंद्रेण समाश्रिता या ॥१८॥
द्वितीयतंत्र्योज्वलधैवताख्यः शुद्धो निषादाह्वयकः पुरस्तात् ॥
स्यात् कैशिकी निर्लघुषड्जकश्च शुद्धः सनामार्षभको विशुद्धः ॥१९॥
स्वराः प्रभूता इति षड् भवंति षट्सूक्तसारीषु यथा क्रमेण ॥
द्वितीयतंत्र्या जनितौ विशुद्धौ सरी प्रयोगे न च रक्षणीयौ ॥२०॥
तृतीयया तंत्रिकयाऽपि यस्मान्मंद्रौ विशुद्धौ जनितौ पुनस्तौ ॥
एतेऽनुमंद्राः कथिता मया च मंद्रस्वरांस्तानधुना ब्रवीमि ॥२१॥

तृतीयया मंद्रसयुक्ततंत्र्यानुमंद्रवत् षट्स्वपि सारिकासु॥
भवंति ते तु क्रमतोऽथ तत्र तृतीयतंत्र्योज्वलमध्यमश्च ॥२२॥
लघ्वादिकः पंचमकोऽप्रयोगौ चतुर्थतंत्रीजनितौ पुनर्यत् ॥
मंद्रेण मेनान्वितया चतुर्थ्या तंत्र्या भवेयुः क्रमशः स्वरास्ते ॥२३॥
सारीषु षट्सु प्रतिपादितोऽसौ लघ्वादिकः पंचमनामधेयः ॥
विशुद्धपो धैवतकोऽपि शुद्धः शुद्धो निषादाव्हयकः पुरस्तात् ॥२४॥
स्यात्कैशिकी निर्लघुषड्जनामा मंद्रस्वराः संगदिता मयैते ॥
तंत्रीचतुष्केण पुरोदितासु सारीषु षट्सु प्रथिताः स्वरा ये ॥२५॥
सर्वेऽनुमंद्राव्हयकाश्च मंद्राः स्वयंभुवो न स्वधिया निबद्धाः ॥
प्रमाणयुक्ताः सकलस्वरास्ते नैवान्यथा कश्चन कर्तुमीशः ॥२६॥
हीनाधिकैकैकश्रुतिस्वरा ये मंद्रानुमंद्राश्रिततारसंस्थाः ॥
न दोषवंतस्त्वतिदुर्ग्रहं तदसंप्रदायाश्रितपंडितानाम् ॥२७॥
संवादिनौ योजय सर्वतस्तु स्वस्वप्रमाणादिति मध्यतोऽपि ॥
तारेऽतितारे च निवेशनीयाः सार्यो यथायोगमिमाः सुधीभिः ॥२८॥
मध्यादिकस्थानकसारिकासु तुरीयतंत्रीजनितग्रहाख्याः ॥
स्वराः प्रयोज्या न तु भिन्नतंत्रीत्रयोद्भवा गीतविचक्षणेन ॥ २९ ॥
चतुर्दशोक्ता ननु पूर्वमेते स्वरास्ततो द्वादशसंख्यकानाम् ॥
सारीनिवेशः क्रियते भवद्भिः कुतोंऽतरे काकलिनि द्वयोर्न ॥३०॥
अत्रोच्यते काकलिनोंऽतरस्य पंक्तौ प्रयुज्यां यदि सारिके द्वे ॥
संकीर्णभावान्न तदानुकूल्यं स्याद्वादनेऽतो न कृते पृथक्के ॥३१॥
तयोः समुत्पत्तिरुदीर्यते तु चेत्प्रस्तुतस्तत्सहितोऽपिरागः ॥
लघ्वाख्ययोः षड्जमयोश्च सार्यौ स्यातां यदैकैकश्रुतेर्विहीनौ ॥३२॥
तदा च काकल्यभिधांतरौ स्तः किंत्वत्र सूक्ष्मध्वनिभेदविज्ञाः ॥
लघ्वादिकं सं लघुमध्यमं च तत्प्रातिनिध्येन वदंति लक्ष्ये ॥३३॥
चतुःश्रुतित्वं रिधयोर्यदेतत्पंचश्रुतित्वं त्वथ मध्यमस्य ॥
यदा भवेत्प्रस्तुतरागवर्ति तदानुकूल्यां कुरु यंत्रसारीम् ॥३४॥

विशुद्धमेला विहितेति वीणा त्वस्यां प्रभेदत्रयमन्यदस्ति ॥
द्वितीयतुर्योर्ध्वगतंत्रिजन्योः स्याद्विपरीत्यात्पमयोस्तदैका ॥३५॥
अत्रानुमंद्राव्हयषड्जतंत्र्यां मपौ चतुस्त्रिश्रुतिकावयोगौ ॥
पतंत्रिका मध्यमरंजितान्या तत्राब्धिरामश्रुतिकौ मपौ स्तः ॥३६॥
सयुक्ततंत्र्यां जनितावयोगौ परा मतंत्री पयुता तथैव ॥
शुद्धौ सरी पंचमतंत्रिकोत्थौ तदा प्रयोगे न च रक्षणीयौ ॥३७॥
उक्ता विशुद्धाव्हयमेलभेदा या मध्यमेला परिलक्ष्यतेऽथ ॥
विशुद्धमेलाव्हयवीणिकायामेवोपरिष्टाद्गततंत्रिकासु ॥३८॥
आद्यानुमंद्राव्हयपंचमेन युता द्वितीया यदि मंद्रसेन ॥
तंत्री तृतीयात्वथ मंद्रपेन तुरीयतंत्री यदि मध्यसेन ॥३९॥
यदोपरिष्टाद्गततुर्यतंत्र्या पार्श्वत्रितंत्रीषु समश्रुतित्वम् ॥
शुद्धौ सरी पाव्हयतंत्रिकोत्थौ धीरैः प्रयोगे न च संप्रयोज्यौ ॥४०॥
स्यान्मध्यमेलेयमिति प्रयुक्ता किंत्वत्र भेदोऽपर एव चास्ति ॥
पतंत्रिकास्थानमयोजिता स्यात्तत्राब्धिरामश्रुतिकौ मपौ यौ ॥४१॥
सतंत्रिकायां जनितावयोगौ पार्श्वत्रितंत्रीश्रुतितापि तद्वत् ॥
तुरीयतंत्रीजनितौ स्वरौ यौ लोप्यौ तु तौ नैव कदाचिदत्र ॥४२॥
नादस्य मंद्राज्जनिरुक्तपूर्वा स्याद्विपरीत्येन विपंचिकायाम् ॥
अथ स्वराणां विकृतप्रभेदा यै रागमेला जनिताः क्रमेण ॥४३॥
सुविस्तरं प्रस्तरणाय तेषां युक्तिं सुबोधामुपवर्णयामि ॥
सगौ मपौ निश्च यथाक्रमेण श्रुतित्रयं यांति विकारलब्धौ ॥४४॥
पर्यायवृत्या विकृतैश्च तत्र व्यस्तैः समस्तैः प्रभवंति भेदाः ॥
किंतु स्वरा ये विकृताश्च लिप्यां वक्रोत्तमांगाः प्रकटीभवेयुः ॥४५॥
षड्जो यदा वैकृतिको भवेद्वा क्रमेण कार्यो निधयोर्विलोपः ॥
एवं गमौ स्तो विकृतौ पनी च स्वपूर्वशुद्धान् क्रमतस्तु लुंपेत् ॥४६॥
तत्रावधिः षड्जकपंचमार्वाक् श्रुतित्रये द्वित्वमवश्यमेषाम् ॥
यदा समौ पंचमको द्विरुक्ताः क्रमेण न स्यान्निगमाद्विरुक्तिः ॥४७॥

यदैव सन्योर्युगपद्विकृत्यां भवेद्ध्रुवं धैवतकस्य लोपः ॥
गमौ विकारौ युगपद्यदा तु तदा सदा स्यादृषभस्य लोपः ॥४८॥
समध्यमः पंचमको द्विरुक्तो गांधारको वैकृतिकस्तु यत्र ॥
न स्याद्विरुक्तस्य गनामकस्य तत्रैव लोपस्त्वृषभस्वरस्य ॥४९॥
द्विधा द्विधा षड्जगमांतिकानां पस्य त्रिधा स्यात् क्रमतो विकृत्याम् ॥
चतुर्भिदाः स्युः सगयोर्विकृत्यां तथा चतुर्धा समयोर्विकृत्याम् ॥५०॥
रसप्रभेदाः सपयोश्च तद्वदेको हि सन्योर्गमयोस्तथैकः ॥
गपाविकृत्यां त्रिविधा चतुर्धा गन्योर्विकृत्यां मपयोर्द्विधा च ॥५१॥
मन्योश्चतुर्धा पनिषादयोः षट् द्विधा विकृत्यां सगमध्यमानाम् ।
षोढा विकृत्यां सगपंचमानां सगांतिके वैकृतिके द्विधा च ॥५२॥
भिदाश्चतस्रः समपाविकृत्यां द्विधा विकृत्यां समसप्तमानाम् ॥
त्रिधा विकृत्यां निपषड्जकानामेको विकृत्यां गमपंचमानाम् ॥५३॥
गमांतिके वैकृतिके तथा द्वौ गपांतिके स्युर्विकृतौ च षोढा ॥
मपांतिके वैकृतिके चतुर्धा द्विधा विकृत्यां सगमाख्यपानाम् ॥५४॥
एको विकृत्यां सगमांतिकानां त्रेधा विकृत्यां सगपांतिकानाम् ॥
द्विधा विकृत्यां समपांतिकानां द्वेधा विकृत्यां गमपांतिकानाम् ॥५५॥
एकैव पंचस्वपि वैकृतेषु, भेदा भवेयुः क्रमतश्च सर्वे ॥
क्रमेण चैकैकविकारवत्वे रुद्रप्रभेदाः प्रभवंति तत्र ॥५६॥
पंचाग्निभेदा द्विविकारतः स्युः पक्षाग्निभेदास्त्रिविकारतः स्युः ॥
दश प्रभेदास्तु चतुर्विकारादेको भवेत्पंचविकारतस्तु ॥५७॥
खांकैः कृता शुद्धसमन्वितानां संख्या भिदानां बुधविठ्ठलेन ॥
केचिद्विलुप्ताः कतिचिद्विरुक्ताः क्रमे स्वरा ये विकृतेर्वशात्तु ॥
मूलक्रमोच्चारमसीषु वक्ति श्रीविठ्ठलः श्रीकरणैकधीरः ॥५८॥

## अथ मेलप्रकरणम्

मेलेषु सर्वेष्विह वर्णितेषु ज्ञानाय रागोद्भवनैकहेतून् ॥
मेलानिदानीं विवृणोमि कांश्चित् पूर्वोक्तलक्ष्मान्वितवीणिकायाम् १

तत्राद्यमेलस्तु मुखारिकायास्ततो भवेन्मालवगौडमेलः ॥
श्रीरागमेलस्तदनंतरं स्यात्स्याच्छुद्धनट्टाव्हयकस्य मेलः ॥ २ ॥
देशाक्षिकाया अपि मेलकः स्यात्कर्णाटगौडस्य भवेत्सुमेलः ॥
केदारकाख्यस्य भवेत्सुमेलो हिजेजमेलोऽपि हमीरमेलः ॥ ३ ॥
कामोदरागाभिधकस्य मेलस्ततः सुतोड्याव्हयकस्य मेलः ॥
आभीरिकायाः सुमतश्च मेलो मेलो भवेच्छुद्धवराटिकायाः ॥ ४ ॥
स्याच्छुद्धरामक्रयभिधस्य मेलो देवक्रियायाश्च भवेत्तु मेलः ॥
सारंगमेलस्तदनंतरं स्यात्कल्याणमेलस्तु ततः पुरः स्यात् ॥ ५ ॥
हिंदोलरागस्य भवेत्तु मेलः स्यान्नादरामक्रयभिधस्य मेलः ॥
इतीरितास्ते नवचंद्रसंख्या एवं परांस्तान् कलयंतु तज्ज्ञाः ॥ ६ ॥

जन्यजनकरागस्वरनिरूपणम्

सप्तस्वरा यत्र भवंति शुद्धा मुखारिकायाः कथितः स मेलः ॥
मुखारिकामेलसमुद्भवास्तु मुखारिकाद्याः प्रभवंति केचित् ॥
न्यासांशसा सग्रहसंयुता सा पूर्णा मुखारी क्रियते सदैव ॥
इति मुखारी ॥

शुद्धौ सरी मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
लघ्वादिकौ षड्जकमध्यमौ चेत्तदा भवेन्मालवगौडमेलः ॥
मेलादतो मालवगौडनामा गौंडक्रिया गुर्जरिका च टक्कः ॥
पाडी कुरंजी बहुली च पूर्वी रामक्रिया द्राविडगौडनामा ॥
गौडी च बंगालकनामधेयस्त्रासावरी पंचमरेवगुप्ती ॥
मंजर्यपि स्यात्प्रथमादिरेषा कर्णाटबंगालविशुद्धगौडौ ॥
स्याच्छुद्धपूर्वो ललितश्च देवगांधारको मारविकादयस्तु ॥
न्यंशग्रहान्तो रिपवर्जितो वा सायं भवेन्मालवगौड एषः ॥
इति मालवः ॥

सांशग्रहा सांतयुता धरिक्ता गेया पुनर्गौडकृतिः प्रभाते ॥
इति गौंडकृतिः ॥

न्यंशग्रहान्ता ससमुद्रिता वा स्याद्गुर्जरी प्रातरियं विगेया ॥

इति गुर्जरी ॥

सांशग्रहांतोऽन्तरकाकलीकः पूर्णोऽत्ययामे क्रियते हि टक्कः ॥

इति टक्कः ॥

साशान्तिका सग्रहणी गरिक्ता स्यात्पाडिका तूदयमेति सायम् ॥

इति पाडी ॥

सांशांतिका सग्रहणी कुरंजी धाल्पा प्रयोगे विहिता सदैव ॥

इति कुरंजी ॥

मांशग्रहांता गनिवर्जिता वा नवा विगेया बहुली पराह्णे ॥

इति बहुली ॥

सांशांतिका सग्रहिका च पूर्णा स्यात्पूर्विका सा दिनतुर्ययामे ॥

इति पूर्वी ॥

सांशग्रहांता मनिवर्जिता च सा स्यात्तु रामक्र्यभिधा सदैव ॥

इति रामक्रीः ॥

न्यंशग्रहातः सकलस्वरश्च स्फुरत्सपो द्राविडगौडकः स्यात् ॥
सायंतनः कैश्चिदपीरितोऽसौ सालंगको वा गुणकर्यपीति ॥

इति द्राविडगौडः ॥

सांशग्रहा सांतवती धगाभ्यां रिक्ता दिनान्ते विहिता तु गौडी ॥

इति गौडी ॥

सांशग्रहांतः सकलस्वरश्च सदैव बंगालकनामकः स्यात् ॥

इति बंगालः ॥

मांशग्रहा मांतवती च पूर्णा ह्यासावरी शश्वदसौ नियुक्ता ॥

इत्यासावरी ॥

पांशांतिकः पग्रहको रिरिक्तोऽसौ पंचमः प्रातरुपैति जन्म ॥

इति पंचमः ॥

न्यासांशरी रिग्रहिका विगेया स्याद्देवगुप्तिस्त्वसपा दिनान्ते ॥

इति रेवगुप्तिः ॥

पांशग्रहन्यासयुता सदैव मंजर्युपास्या प्रथमादिरेषा ॥

इति प्रथममंजरी ॥

साशग्रहांतो रिविवर्जितश्च कर्णाटबंगाल उषस्युपात्तः ॥

इति कर्णाटबंगालः ॥

न्यंशग्रहांतश्च पवर्जनीयः शुद्धादिको गौड इतिप्रशस्तः ॥

इति शुद्धगौडः ॥

सांशांतिकः सग्रहकः परिक्तः प्रातस्तु शुद्धो ललिताभिधानः ॥

इति शुद्धललितः ॥

साशग्रहः सांतयुतश्च पूर्णः स्याद्देवगांधारक एष नित्यम् ॥

इति देवगांधारः ॥

सांशग्रहांता रिधवर्जिता च निरूप्यते मारविका सदैव ॥

इति मारविका ॥

इति मालवगौडमेलः ॥

चतुःश्रुती यत्र रिधौ भवेतां साधारणो गोऽपि च कैशिकी निः ॥
तथा विशुद्धाः समपा भवंति श्रीरागकस्याभिहितः स मेलः ॥
श्रीरागकोऽस्मादपि मालवश्रीर्धन्नासिका भैरविका तथैव ॥
अन्येऽपि रागाः कतिचित्प्रसिद्धा भवंति सैंधव्यभिधादयश्च ॥
सांशग्रहांतो धविवर्जितो वा श्रीरागनामाऽस्तमिते रवौ स्यात् ॥

इति श्रीरागः ॥

सांशग्रहा सांतयुता रिधाल्पा पूर्णा सदा राजति मालवश्रीः ॥

इति मालवश्रीः ॥

षड्ग्रहांता रिधवर्जितेष्टा धन्नासिका सांशवती प्रभाते ॥

इति धन्नासी ॥

सांशग्रहांता रिपमुद्रिता च पूर्णा सदा भैरविका विगेया ॥

इति भैरवी ॥

सांशग्रहांता त्वरिपा सदैव स्यात्सैंधवी सद्भिरकैर्लसंती ॥

इति सैंधवी ॥

इति श्रीरागमेलः ॥

निगौ यदा त्रिश्रुतिकौ भवेतां लघ्वादिकौ षड्कमध्यमौ च ॥
तथा विशुद्धाः समपा भवंति विशुद्धनट्टाह्वयकस्य मेलः ॥

विशुद्धनट्टाह्वयमेलकेऽपि विशुद्धनट्टप्रमुखा भवंति ॥
सांशग्रहांतः सकलस्वरश्च स्याच्छुद्धनट्टोऽहनि तुर्ययामे ॥

इति शुद्धनट्टः ॥

इति शुद्धनट्टमेलः ॥

लघ्वादिकौ षड्जकमध्यमौ चेद्गांधारकस्त्रिश्रुतिकस्तथा स्यात् ॥
शुद्धा भवेयुः समपा निषादो देशाक्षिकाया गदितः स मेलः ॥
देशाक्षिकामेलसमुद्भवाश्च देशाक्षिकाद्याः कतिचिद्भवंति ॥
गांशग्रहां तामनिमध्यमां वा देशाक्षिकां प्रातरवैहि पूर्णाम् ॥

इति देशाक्षी ॥

इति देशाक्षीमेलः ॥

शुद्धौ समौ पंचमको विशुद्धः शुद्धो निषादो लघुमध्यमश्च ॥
निगौ यदा त्रिश्रुतिकौ भवेतां कर्णाटगौडस्य तदैष मेलः ॥
कर्णाटगौडोऽपि तुरुष्कतोडी विशुद्धबंगालकनामधेयः ॥
छायादिको नट्टकनामधेयः सामंतकाद्याः प्रभवंत्यमुष्मात् ॥
न्यंशग्रहांतो रिधवर्जितो वा पूर्णस्तु कर्णाट इनास्तशोभी ॥

इति कर्णाटः ॥

मांशग्रहा मांतवती च पूर्णा मन्याहतां पंचमकंपयुक्ता ॥
सहस्ररश्मेरुदये विरेजे तुरुष्कतोडीयमुदीर्यमाणा ॥

इति तुरुष्कतोडी ॥

मांशांतको मग्रहकश्च पूर्णः स्याच्छुद्धबंगाल उषस्युपात्तः ॥

इति शुद्धबंगालः ॥

षड्ग्रहः सांतयुतश्च सांशोंऽतराश्रितः काकलिदीप्यमानः ॥
छायादिमः सायमसौ विगेयो नट्टाह्वयो गानविचक्षणेन ॥

इति छायानटः ॥

षड्ग्रहन्यासयुतश्च पूर्णः षड्जांशयुक्तोंऽतरकाकलीकः ॥
प्रयुज्यमानः स विभातकाले चकास्ति सामंतकनामधेयः ॥

इति सामंतः ॥

इति कर्णाटगौडमेलः ॥

लघ्वादिकौ षड्जकमध्यमौ च शुद्धौ समौ पंचमको विशुद्धः ॥
निगौ विशुद्धौ च यदा भवंति तदा तु केदारकमेल उक्तः ॥
केदारनारायणगौडकाख्यौ वेलावली शंकरभूषणाख्यः ॥
स्तो नट्टनारायणमध्यमादी मल्लारको गौंडकनामधेयः ॥
सालंगनट्टाभिधकश्च भूपालिका च सावेर्यभिधानिका च ॥
सौराष्ट्रिका नाम तथापि चान्ये कांबोजिकाद्याः प्रभवंत्यमुष्मात् ॥
न्यंशांतको निग्रहकोऽरिधो वा केदारकः सायमभीष्ट एषः ॥

इति केदारः ॥

गांशग्रहो गांतयुतो रिशून्यः प्रातस्तु नारायणगौडकः स्यात् ॥

इति नारायणगौडः ॥

धांशग्रहांता रिपवर्जिता वा वेलावली प्रातरसावभीष्टा ॥

इति वेलावली ॥

षड्जग्रहः सांतयुतोंऽशषड्जः सप्तस्वरो मुद्रितभूषितश्च ॥
सूर्योदयेऽयं समुदीर्यमाणो विराजते शंकरभूषणाख्यः ॥

इति शंकराभरणः ॥

षड्जग्रहः सांतयुतोंऽशषड्जो युतस्तु पूर्णोऽतरकाकलिभ्याम् ॥
विराजमानः सततं नियुक्तोऽसौ नट्टनारायणनामधेयः ॥

इति नट्टनारायणः ॥

मांशांतको मग्रहको रिधास्तः प्रातः प्रयुज्येत स मध्यमादिः ॥

इति मध्यमादिः ॥

धांशग्रहो धांतयुतोऽसपश्च मल्लारनामोषसि गीयतेऽसौ ॥

इति मल्लारः ॥

धांशांतको धग्रहकश्च पूर्णो विभातकाले च स गौंडरागः ॥

इति गौंडः ॥

सांशग्रहः सांतयुतश्च पूर्णः सालंगनट्टोऽहनि तुर्ययामे ॥

इति सालंगनट्टः ॥

गांशग्रहांता निमवर्जिता या भूपालिका प्रातरसौ विगेया ॥

इति भूपाली ॥

धांशग्रहांता सपवर्जनीया सावेरिका प्रातरियं नियोज्या ॥

इति सावेरी ॥

सांशग्रहा सांतयुताच पूर्णा सौराष्ट्रिका सायमियं विगेया ॥
इति सौराष्ट्री ॥
सांशग्रहा सांतवती मनिभ्यां समुज्झिता चांतरकाकलीष्टा ॥
कांबोजिका सा तु विगीयमाना विभातकाले नितरां विभाति ॥
इति कांबोजी ॥
इति केदारमेलः ॥
शुद्धौ सरी मध्यमपंचमौ च विशुद्धधो मो लघुशब्दपूर्वः ॥
निःकैशिकी चापि यदा तदा तु हिजेजरागस्यहि मेलकः स्यात् ॥
हिजेजमेलात्तु हिजेजकाख्योऽप्यन्ये तथा भैरवकादयः स्युः ॥
न्यंशग्रहांत्योंऽतरकाकलीकः पूर्णो हिजेजः क्रियते सदैव ॥
इति हिजेजः ॥
धांशग्रहन्यासयुतश्च पूर्णः प्रातः प्रयुज्येत स भैरवाख्यः ॥
इति भैरवः ॥
इति हिजेजमेलः ॥
शुद्धौ सगौ मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
लघ्वादिकौ षड्जकमध्यमौ चेत्तदा हमीराह्वयनट्टमेलः ॥
इति हमीरनट्टमेलः ॥
शुद्धौ धपौ पंचमको लघुश्च शुद्धौ सरी त्रिश्रुतिकौ निगौ च ॥
एवं यदा स्यात्स्वरमेलनं च तदा हि कामोदकमेल एषः ॥
मेलादतो येऽपि विशेषरागाः कामोदकाद्याः प्रकटीभवंति ॥
षड्जग्रहांशांतविराजमानः कामोदरागो दिवसांत्ययामे ॥
इति कामोदः ॥
इति कामोदमेलः ॥
शुद्धौ सरी मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
साधारणो गोऽपि च कैशिकी निस्तदा तु तोड्याह्वयकस्य मेलः ॥
तोड्यादयः केचन सिद्धरागा भवंति तोडीगतमेलतोऽपि ॥
मांशग्रहांता पधकंपयुक्ता तोडी भवेत्प्रातरसौ तु पूर्णा ॥
इति तोडी ॥
इति तोडीमेलः ॥

शुद्धौ सपौ शुद्धमधैवतौ च साधारणो गोऽपि च शुद्धगश्च ॥
षड्जाभिधानो लघुशब्दपूर्व आभीरिकाया गदितः स मेलः ॥
आभीरिकामेलसमुद्भवा ये आभीरिकाद्याः प्रभवंति केचित् ॥
षड्जग्रहा सांतवती च सांशाऽऽभीरी दिनांते जनिमेति पूर्णा ॥

इत्याभीरी ॥

इत्याभीरीमेलः ॥

शुद्धौ सरी शुद्धगपंचमौ चेत्तथोज्वलो धैवतनामधेयः ॥
लघ्वादिकौ षड्जकपंचमौ च मेलस्तदाशुद्धवराटिकायाः ॥
सांशग्रहा सांतवती च शुद्धवराटिकेष्येत सदैव पूर्णा ॥

इति शुद्धवराटी ॥

षड्जग्रहन्यासवती च सांशा सप्तस्वरा काकलिनोपयाता ॥
दिवानिशं राजति गीयमाना तद्वेदिभिः सामवराटिकासौ ॥

इति सामवराटी ॥

इति शुद्धवराटीमेलः ॥

शुद्धौ सरी शुद्धपधैवतौ चेन्मनामधेयो लघुपूर्वकश्च ॥
लघ्वादिकौ षड्जकपंचमौ चेद्विशुद्धरामक्रयभिधस्य मेलः ॥
मेलादमुष्माच्च विशुद्धरामकृतिस्तथा त्रावणिकाभिधाना ॥
देशीविभासौ ललितादयोऽपि प्रसिद्धरागाः प्रभवंति चान्ये ॥
सांशग्रहः सांतयुतश्च पूर्णो विशुद्धरामक्रयभिधो दिनस्य ॥
मध्यात्परं गीयत आख्ययैनं तथा जगुः केचन देशिकारम् ॥

इति शुद्धरामक्रीः ॥

सांशग्रहा सांतयुता च पूर्णा सा त्रावणी दीव्यति वासरांते ॥

इति त्रावणी ॥

न्यासांशरी रिग्रहणी परिक्ता प्रयुज्यते शश्वदसौ च देशी ॥

इति देशी ॥

सांशग्रहांतो ललितोऽपरोऽसौ सप्तस्वरः प्रातरसौ विगेयः ॥

इति ललितः ॥

इति शुद्धरामक्रीमेलः ॥

शुद्धौ समौ शुद्धपनी तथैव लघ्वादिकौ षड्जकपंचमौ च ॥
पंचश्रुतिर्मश्च यदा भवेत्तु देवक्रियायाः कथितः स मेलः ॥
मेलादमुष्मात्कतिचित्तु रागा देवक्रियाद्याः प्रकटीभवंति ॥
षड्जग्रहः सांतयुतश्च सांशः समुज्झितः पंचमकेन वा स्यात् ॥
तुरीययामे दिवसस्य शुद्धवसंतको देवकृतिः सदैव ॥

इति देवक्रीः ॥

इति देवक्रीमेलः ॥

शुद्धौ सगौ मध्यमपंचमौ च लघ्वादिकौ षड्जकपंचमौ चेत् ॥
निःकैशिकी चापि यदा तदा स्यात्सारंगकस्याभिहितः स मेलः ॥
सारंगकाद्या जनिता भवेयुरनेन सारंगकमेलकेन ॥
सांशग्रहः सांतयुतश्च पूर्णः सारंगकः स्यादपराह्णशोभी ॥

इति सारंगः ॥

इति सारंगमेलः ॥

शुद्धौ सगौ शुद्धपधौ तथैव लघ्वादिकौ षड्जकपंचमौ च ॥
साधारणो गोऽपि यदा भवेयुः कल्याणकस्याभिहितः स मेलः ॥
कल्याणमेलात्प्रथिता भवंति कल्याणकाद्याः कतिचित्तु रागाः ॥
सांशग्रहः सांतयुतश्च पूर्णः कल्याणनामोदयमेति सायम् ॥

इति कल्याणः ॥

इति कल्याणमेलः ॥

शुद्धौ सरी शुद्धमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
गनी तथा त्रिश्रुतिकौ भवेतां तदातु हिंदोलक मेल उक्तः ॥
अतोऽपि हिंदोलवसंतकौ च केचित्प्रसिद्धाः प्रभवंति चान्ये ॥
सांशग्रहांतो रिपवर्जितश्च हिंदोलकः प्रातरुपैति जन्म ॥

इति हिंदोलः ॥

सांशांतकः सग्रहकश्च पूर्णो वसंतनामोषसि गीयतेऽसौ ॥

इति वसंतः ॥

इति हिंदोलमेलः ॥

शुद्धौ यदा षड्जकपंचमौ च शुद्धौ रिधौ मध्यमकोऽपि शुद्धः॥
साधारणो गो लघुषड्जकश्च स्यान्नादरामक्र्यभिधस्य मेलः ॥
यो नादरामक्र्यभिधो ह्यमुष्मादन्ये प्रसिद्धाः प्रभवंति केचित् ॥
सांशग्रहां सांतयुतां च नादरामक्रियां सायमुशंति पूर्णाम् ॥

इति नादरामक्रीः ॥

इति नादरामक्रीमेलः ॥

लक्ष्माणि रागेष्विति लक्षितानि क्रियंत उक्तानि विमृश्य दद्यात् ॥
न्यासग्रहांशेषु च पूर्णतायां श्रुतौ तथा षाडव औडवेऽपि ॥
सर्वत्र देशीगतरागवृंदे श्रीमद्धनूमान्नियमं न वव्रे ॥
रागाः शिवेन त्रिविधाः प्रयुक्ताः शुद्धाश्च सालंगगतास्तथैव ॥
संकीर्णकाश्चेति तदैव शुद्धो योऽनन्ययुक्तोऽप्यतिरंजकः स्यात् ॥
सालंगकश्चान्यवरक्तियुक्तः संकीर्णकस्तूभयरक्तिहेतुः ॥
ध्वनेर्विशेषः स्वरवर्णभेदैर्विभूषितो यो जनरंजकः स्यात् ॥
रागो हि धीरैर्गदितोऽप्यनंता रागाश्च देशस्वरनामकाः स्युः ॥
रागे नु सप्तस्वरके भवंति पूर्वोदिताः सक्रमकूटतानाः ॥
नवाङ्कऋत्वग्निसचंद्रसंख्या रागे मताः षाडवतोऽपि तानाः ॥
षट्पंचरंध्रेन्दुमिताश्च तानाः स्युरौडवे मार्गणपक्षरामाः ॥

सकलस्वरमयं श्रीरुद्रवीणाप्रकारं ।
स्वरवररचनासद्रागमेलप्रभेदम् ॥
सुललितगतिनानारागलक्ष्मादिकं च ।
नरवरबुरहानः स्पष्टमेवं करोति ॥

इति श्रीकर्णाटकजातीयपुंडरीकविठ्ठलविरचिते सद्रागचंद्रोदये
स्वरमेलप्रसादो द्वितीयः ।

## अथ गमकालप्तिप्रकरणम् ।

कंपः स्वरे स्याद्गमको जनानामानंदकस्तस्य गदामि भेदान् ॥
तत्रादिमः स्यात्तिरिपाभिधानस्ततः परं स्यात्स्फुरिताह्वयश्च ॥
स्यात्कंपितो लीनकनामधेयश्चांदोलितश्चापि वलिस्त्रिभिन्नः ॥

ततः पुरस्तात् कुरुलाहताख्यावुल्लासितप्लावितहुंफिताश्च ॥
ततःपरं मुद्रितनामितौ च मिश्रश्च ते स्युः शरचंद्रसंख्याः ॥
लघिष्टकोच्चारमितो भवेद्यो ध्वानस्य कंपानुकृतेर्मनोज्ञः ॥
द्रुतस्य तुर्यांशकवेगयुक्तः स तु प्रणीतस्तिरिपाभिधानः ॥
तृतीयकांशप्रमितो द्रुतस्य वेगात्प्रदिष्टः स्फुरिताह्वयश्च ॥
द्रुतार्धमानाज्जववान्प्रयुक्तो यः कंपिताख्यो गमकः प्रसिद्धः ॥
लीनस्तु स स्याद्द्रुतमानवेगादांदोलितः स्याल्लघुवेगतोऽपि ॥
अनेकवक्रत्वयुतस्त्वरातः प्रयुज्यमानो वलिरेष उक्तः ॥
त्रिस्थानविश्रांतिविवर्जितो यस्त्रिभिन्ननामा निविडस्वरश्च ॥
चेद्ग्रंथिलः कंठमृदुर्भवेच्च तदा वलिः स्यात्कुरुलाभिधानः ॥
स्वरं निहत्याग्रगतं निवृत्तो निगद्यते चाहतनामधेयः ॥
अथापरांस्तु क्रमतः स्वरान् यो व्रजेत्तमुल्लासितमामनंति ॥
यत्कंपनं स्यात् प्लुतमानवेगात्तं प्लावितं नाम वदंति तज्ज्ञाः ॥
यः स्याद्गभीरो हृदयंगमश्च हुंकारको हुंफितनामयुक्तः ॥
मुखस्य संमुद्रणसंभवो यो विधायते मुद्रितकस्वरः स्यात् ॥
स्यान्नामितोऽसौ नमनात्स्वराणामेतद्द्विदामिश्रणतोऽपि मिश्रः ॥
मिश्रस्य भेदा बहवो भवंति न वर्णिता विस्तरकातरेण॥

इति गमकभेदाः ॥

स्थायास्तु रागावयवाश्च सप्त त्वेते भवेयुर्भजनाश्रितास्तु ॥
ततो मताः स्थापनिकोपयाता गतिस्थिताः शब्दसमाश्रिताश्च ॥
ढालाश्रिता वाहनिकाश्रिताश्च छायागताश्चेत्यथ लक्षणानि ॥
विशिष्टमाधानमतिप्रयत्नाद्रागस्य चोक्तं भजनं तदा स्यात् ॥
स्थाया भवेयुर्भजनाश्रितास्ते संस्थाप्य संस्थाप्य कृतिस्तु तेषां ॥
लक्ष्ये तु रम्यानुपदं सुधीभिः स्थाया मताः स्थापनिकोपयाताः ॥
गतिस्तु गीतस्य विलासयुक्ता गजेंद्रवत्तत्सहिता गतिस्थाः ॥
स्निग्धत्वमाधुर्यसुमांसलाश्च ये मुक्तशब्दैः परिगृह्यमाणाः ॥
स्थायास्तु ते शब्दगता भवंति ढालस्तु मुक्ताफलवत्प्रचारः ॥

विलुंठनात्मा सहिता ह्यनेन स्थाया मता ढालसमाश्रितास्ते ॥
आरोहिगं चाप्यवरोहिसंस्थं संचारिनिष्ठं स्थिरकंपनं च ॥
सा गीयते वाहनिका तु तज्ज्ञैस्तदन्विता वाहनिकाश्रिताः स्युः ॥
छाया तु षोढा स्वररागरागांतरोत्थिता देशसमुद्भवा च ॥
क्षेत्रोद्भवा यंत्रसमुद्भवेति तल्लक्षणानि क्रमतो ब्रवीमि ॥
न्यूनाधिकत्वेन यदा श्रुतीनां स्वरांतरा स्यात्स्वरसंभवा सा ॥
छाया तु रागस्य निजैव या स्याद्रागोद्भवां तां निगदन्ति धीराः ॥
रागे तु रागांतरवद्भवेद्या गीयेत रागांतरसंभवा सा ॥
देशस्वभावादुदयं प्रपन्ना रागे भवेद्देशसमुद्भवा च ॥
वपुस्त्विति क्षेत्रमुदीर्यते तु क्षेत्रोदया क्षेत्रसमुत्थिता स्यात् ॥
या वंशयंत्रादिसमुद्भवा च निगद्यते यंत्रसमुत्थिताऽसौ ॥
स्थाया अमूभिः सहितास्तु गीतारछायाश्रिता गीतविशेषविज्ञैः ॥

इति स्थायभेदाः ।

या वर्णकालंकरणैः प्रपन्ना स्थायैः सुकंपैरतिचित्रिता च ॥
मनोहरा स्याद्बहुभंगिभेदैरालप्तिरुच्येत तदा मुनींद्रैः ॥
यत्र ग्रहन्यासकयोश्च मंद्रापन्यासतारौडवषाडवानां ॥
पूर्णस्य मध्यांशकयोर्विवेको रागस्य चालाप इति प्रसिद्धः ॥
रूपप्रकाशीकरणं तयोश्च तदेव रागालपनं वदंति ॥
सा तु द्विधा रागनिबद्धकाभ्यां विशेषणाद्ब्रच्मि तयोः प्रभेदम् ॥
या वर्तते वस्त्वनपेक्ष्य रागालप्तिर्निजस्थानचतुष्टयेन ॥
यत्र स्वरे रागनिवेशनं स्यात्स्थायीति नाम्ना मुनिभिः प्रणीतः ॥
द्व्यर्धस्तु तस्मादुदितस्तुरीयः स्यादष्टमस्तु द्विगुणाभिधानः ॥
यः पंचमः षष्ठकसप्तमौ च त्वर्धस्थिता इत्यभिधानकाः स्युः ॥
स्थायिस्वरादूर्ध्वगचालनेन द्व्यर्धादधोवर्तिनि चालनाद्वा ॥
स्थाय्यंतभूतो मुखचाल एषः स्वस्थानकं तत्प्रथमं वदंति ॥
द्व्यर्धस्वरे चालनतस्तदेव स्वस्थानकं तु प्रथितं द्वितीयम् ॥
अर्धस्थिते चालनतस्तृतीयं संचालनाच्च द्विगुणे चतुर्थम् ॥

स्वस्थानकैस्तैरिति सर्वरागालप्तिर्मता गानविशारदानाम् ॥
यदा पृथग्भूतविदारिकः स्यादालापकस्थाय इति प्रसिद्धः ॥
तालेन रागेण च वस्तुगेन निबद्धकालप्तिरियं भवेद्या ॥
सा तु प्रतिग्राहणिका तथान्या प्रभंजनीति द्विविधा भवेच्च ॥
आलप्तिका स्थायममुं विधाय निबद्धकस्यावयवान् गृहीत्वा ॥
यदा प्रतिग्राहणिका तदा स्यात्प्रभंजनी द्वैधमिति व्रजेच्च ॥
विदारिकाभागपदैर्यदिष्टैः स्थायस्थितिः स्याच्च निबद्धकेऽपि ॥
नानाप्रकारः क्रियते तदासौ तज्ज्ञैर्मता स्थायकभंजनी सा ॥
तेन प्रमाणेन च तैः पदैर्या त्वन्यैः प्रकारैरखिलं निबद्धम् ॥
गायेत्तदासावनिबद्धपूर्वा स्याद्भंजनी सा जनरंजनाय ॥
आमोदमंदं त्वधिकप्रसन्नैः स्थायैश्च सूक्ष्मैर्बहुभंगिभिश्च ॥
जीवस्वरव्याप्तिपरैस्तु पूर्वं रागस्य संस्थापनिका क्रियेत ॥

इत्यालप्तिप्रकरणम् ।

अथ वादनानि ।

अथो पुरा लक्षितवीणिकायां सर्वेषु देशीगतवस्तुकेषु ॥
रागेषु केषांचन वादनानि मुग्धावबोधार्थमुदीरयामि ॥
मंद्राश्रितो मध्यगतोऽपि मश्चेत्स्थायी विधीयेत परांस्ततस्त्रीन् ॥
आरुह्य पन्याह्वयषड्जकाख्यान्पंचावरुह्य क्रमतस्तु षड्जात् ॥
स्थायिस्वरांतानुपहन्यतेधः स्वस्थानमाद्यं त्विति मध्यमादेः ॥
द्व्यर्धाख्यमर्धस्थितनामधेयमारुह्य तद्वद्द्विगुणाभिधानम् ॥
आद्यं निजस्थानकमभ्युपैति स्वस्थानकानां त्रितयं परं स्यात् ॥
स्वरं समारोहति च क्रमेण स्यात्सर्वरागेषु निधानमेतत् ॥

इति मध्यमादिः ।

मंद्रस्थितान्निग्रहतः प्रयुज्य परं ततः प्राप्य तृतीयतुर्यौ ॥
उपेत्य च स्थायितृतीयकं च स्थायिस्वरात्तुर्यमथ प्रपद्य ॥
ततः स्वरानप्यवरुह्य पंच स्थायिस्वराधस्तनतुर्यमेत्य ॥
कृत्वा ततः स्थायिपुरःस्थितं च गत्वा स्वरं स्थायिनमग्रगं तु ॥

स्थायिस्वरात्तुर्यमथ प्रपद्य ग्रहस्वरादग्रगतं विहाय ॥
न्यासो विधीयेत यदा ग्रहाख्ये तदा भवेन्मालवगौडनामा ॥
इति मालवगौडः ।

चेद्धैवतं स्थायितया प्रपद्य ततस्तृतीयं च चतुर्थकं च ॥
स्थायिस्वरांतानवरुह्य तत्राधोवर्तमानं तु तुरीयमेत्य ॥
स्थायिस्वरं याति यदा तदानीं रागो भवेद्भैरवनामधेयः ॥
इति भैरवः ।

षड्जं विधाय द्विगुणं ग्रहाख्यमधस्तनं स्थायिनमप्युपेत्य ॥
द्वितीयकं तुर्यमथ प्रयुज्य द्वितीयकं स्थायिनमास्पृशेच्च ॥
नीते विलंबित्वमपि द्वितीये श्रीरागकः स्थायिविमोचनात्स्यात् ॥
इति श्रीरागः ।

मध्यस्थषड्जग्रहतस्तृतीयं यदा समाश्रित्य चतुर्थकं तु ॥
उक्त्वा द्वितीयं तु तृतीयकं च स्पृष्ट्वा स्वरौ तुर्यकपंचमौ च ॥
एतत्क्रमेणाप्यवरोह इष्टः स्थायिद्वितीयं च विनापि तुर्यं ॥
ततस्तृतीयं समुदीर्य मुक्तिर्ग्रहे तु धन्नास्यभिधः प्रसिद्धः ॥
इति धन्नासी ।

चेद्धैवतं स्थायिपरं विलंब्य स्पृष्ट्वा ग्रहाख्यं च तथा द्वितीयम् ॥
ईषद्विलंब्य ग्रहपूर्वसंस्थं तृतीयमारुह्य तथा ग्रहाद्यौ ॥
स्वरौ तृतीयं सुविलंब्य तस्याधस्थग्रहात्स्पर्शनमात्रतस्त्रीन् ॥
आरुह्य संस्पृश्य तथा ग्रहाख्यं स्वरं द्वितीयं समुपेत्य कुर्यात् ॥
ग्रहाभिधाने न्यसनं तदानीमुपेत्य मल्लारकनामधेयः ॥
इति मल्लारः ।

मध्यस्थसं स्थायितया विधाय समेत्य तस्मादधरस्वरौ च ॥
स्थायिस्वरात् त्रीनपि वादयित्वा वेगेनचैतानवरुह्य तद्वत् ॥
ग्रहस्वरेऽतः क्रियते यदा तु तदोपजायेत वसंतनामा ॥
इति वसंतः ।

सस्थायिनं पूर्वगतस्वरं चेद्गत्वा समारोहति पंच तस्मात् ॥
तुर्यं द्वितीयं द्विरुदीर्य मुक्तिः स्थायिन्युपेयाज्जननं वराटी ॥
इति वराटी ।

मध्यस्थषड्जग्रहपूर्वभूतं कृत्वा परौ तुर्यमथो विलंब्य ॥
द्वितीयमास्पृश्य तथा तृतीयं मुक्तौ ग्रहे रामकृतिर्विशुद्धा ॥

इति शुद्धरामक्रीः ॥

इति वादनानि ।

रागाः कियंतः कथिता मयैवं निबध्नतानुग्रहमर्भकेषु ॥
यद्बोधतोऽधीतसुरागतायां सिद्धिं सुधीराः प्रतिपादयेयुः ॥

नरपतिबुरहानो रागविद्याविवेकी
गमकगतिविभेदस्थायकानां प्रभेदम् ॥
सकलजनविपंची रागकाद्यं प्रकारं
गुणिजनमवबोद्धुं चात्र योग्यं करोतु ॥
इति श्रीविठ्ठलादिष्टः प्रसादत्रयसुंदरः ॥
रागचंद्रोदयो भाति जनाज्ञानतमोहरः ॥
विद्वज्जनचकोरा ये रागचंद्रोदयं मम ॥
विलसंतं सुपश्यंतु नादपीयूषकांक्षिणः ॥
वरबुरहदिजाते रागचंद्रे प्रसन्ने
भ्रमतिमिरविशेषो नाशमायात्यशेषम् ॥
इति मनसि विचिंत्य प्रायशो यः पठेदु-
द्भवति सकलपृथ्वीरागिणां रागसिद्धिः ॥
कर्णाटे शैवगंगाभिधनगनिकटे सातनूर्वाह्वयो यो
ग्रामस्तत्राग्रजन्मप्रवरमुनिकराज्जामदग्न्योऽस्ति वंशः ॥
तत्र श्रीविठ्ठलार्योऽभवदमितयशास्तद्गुणाख्या तु तस्यै-
तत्सूनो रागचंद्रोदय इति च भजन्कैरवाणां मुदेऽस्तु ॥

इति श्रीकर्णाटजातीयपुंडरीकविठ्ठलविरचिते सद्राग-
चंद्रोदये आलप्तिप्रसादस्तृतीयः ।

समाप्तोऽयं रागचंद्रोदयो ग्रंथः ॥

---

श्रीपुंडरीकविठ्ठलविरचितः

# सद्रागचंद्रोदयः।



एतत्पुस्तकं

काशीक्षेत्रनिवासिवज्रटंकेत्युपाह्वगणेशशर्मणा

संशोधितम्।

तच्च

मुंबय्यां

भालचंद्रशर्मणा

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्रकाशितम्

शालिवाहनशाकः १८३३ सन् १९१२।

श्रीपुंडरीकविठ्ठलविरचितः

# सद्रागचंद्रोदयः ।



एतत्पुस्तकं

काशीक्षेत्रनिवासिवज्रटंकेत्युपाह्वगणेशशर्मणा संशोधितम् ।

तच्च

मुंबय्यां

भालचंद्रशर्मणा

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्रकाशितम्

शालिवाहनशाकः १८३३ सन् १९१२ ।

॥ श्रीः ॥

# अथ सद्रागचंद्रोदयः प्रारभ्यते ।



श्रीगणेशाय नमः ।

वऱ्हाकारैर्विरचितवपुर्योऽखिलस्थानकस्थोऽ
स्तोकं शोकं नुदति नितरां यः श्रुतिश्रामवर्ती ॥
योऽलंकारैरधिकसुभगो रागपूराभिगम्यो
वंदे कालत्रितयमहितं माधवं तं च नादम् ॥ १ ॥
वंशः फारकिभूपतेः सुसरलो भूभारधारक्षमः
श्रीमत्सद्गुणिदानिशूरविमलक्ष्मापालशाखाबिभृत् ॥
विख्यातो भुवि यत्र काव्यरसिकाः सत्कीर्तिवल्लीश्रिता-
श्चित्रं संचरतीति विश्वमखिलं के वर्णयंतीह तत् ॥ २ ॥
तत्राभूदहमदखानन्नृपतिर्वीराधिवीरेश्वर-
स्त्वौदार्यादिगुणैः समस्तवसुधाधीशैः सदा राजितः ॥
दृप्यच्छत्रुगणेषु च प्रविलसत्संग्रामशक्तस्तथा
संहर्ताऽविरतं दरिद्रतमसो भूमंडलाखंडलः ॥ ३ ॥
तज्जातस्ताजखानो नरपतितिलकः फारकी वै जयंतो
यंता शूरेश्वराणामरिसुभटघटाटोपजीमूतवातः ॥
जातस्तातः प्रजानां भरणवितरणस्थापनाज्ञाकरेभ्यो
नित्यं दानोर्मिलोलैः सकलगुणनिधी राजते राजसिंधुः॥४॥
तज्जः श्रीबुरहानखानचतुरः कामानुकारी वरः
संगीतादिकलाप्रपूर्णविमलः साहित्यतेजोमयः ॥
दारिद्र्यांधतमश्च यश्च गुणिनां हंताद्युदारैः करै-
र्भूमौ फारकिभूपतीशतिलकश्चंद्रश्चिरं राजते ॥ ५ ॥

श्रीमद्दक्षिणदिङ्मुखस्य तिलके × × निदेशे शुभे
नित्यं भोगवतीव भोगिवसती रम्या सुपर्वादिभिः ॥
अस्ति स्वस्तिकरी नरेंद्रनगरी त्वानंदवल्लीति या
तत्र श्रीबुरहानखाननृपतिः संगीतमाकर्णयत् ॥ ६ ॥
संत्यस्मिन् बहुधा विरोधगतयो लक्ष्ये च लक्ष्मोदिते
जानंतीह सुलक्ष्मपक्षविगतिं केचित्परे लौकिकीम् ॥
तत्कुर्वंतु सुलक्ष्मलक्ष्यसहितं रागप्रकाशं बुधा
इत्युक्ते बुरहानखाननृपतौ विद्वत्सभामंडले ॥ ७ ॥

श्रीमद्धनूमद्भरतार्जुनादिहार्दं समादाय सतां जनानाम् ॥
तमोनिरासाय विलासगत्यै सद्रागचंद्रोदयमातनोमि ॥ ८ ॥
अहो बुधाः पूर्णविधूदयेऽस्मिंस्तमस्स्वरूपो ग्रहणैकलोलः ॥
क्रूराशयोयस्तदुपांतमेति तथा प्रदध्वं निजलक्ष्यमत्र ॥ ९ ॥
लक्ष्यप्रधानं खलु शास्त्रमेतन्निशंकदेवोऽपि तदेव वष्टि ॥
यल्लक्ष्म लक्ष्यप्रतिबंधकं स्यात् तदन्यथा नेयमिति ब्रुवाणः ॥१०॥
अत्र प्रसादत्रितयं प्रयुक्तं स्वरप्रसादः प्रथमस्तु तत्र ॥
द्वितीयकः स्यात्स्वरमेलनामा तृतीय आलप्तिगतः प्रसादः ॥११॥
तत्रादिमे नादसमुद्भवश्च तत्स्थानकानि श्रुतयः स्वराश्च ॥
विकारभेदा अथ वादिमुख्या ग्रामत्रयं चाऽपि च मूर्छनाश्च ॥१२॥
तानाश्च तत्प्रस्तरणं च संख्या नष्टं तथोद्दिष्टमथ ग्रहाद्याः ॥
वर्णस्तथाऽलंकरणं क्रमेण वक्ष्यंत एतानि ततो द्वितीये ॥१३॥
वीणा प्रशंसामथ वीणिकायां तंत्रीः सषड्जादिकसारिकास्थाम् ॥
मेलेषु च प्रस्तरणप्रकारसंख्यां कियन्मेलकलक्षणानि ॥ १४ ॥
तेभ्यः पृथग्रागजानिं च रागलक्ष्माणि वक्ष्यामि तथा तृतीये ॥
आलप्तिकाद्यं गमकोक्तिपूर्वं कियत्सु रागेष्वपि वादनानि ॥१५॥
स्वरादिकं नादसमुद्भवं स्यान्नादं ततस्तावदुदीरयामि ॥
युज्येत चात्मा मनसा विवक्षुर्मनोऽग्निनाऽग्निस्त्वनिलेश्वरेण ॥१६॥

ब्रह्मादिमग्रंथिस्थितः स मुख्यः प्राणः क्रमेणोर्ध्वगतिं दधानः ॥
नाभौ तथा हृद्यथ कंठदेशे मूर्ध्न्याननै ध्वानमुपाकरोति ॥ १७ ॥
नाभ्यादिपंचाश्रयगोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टश्च तथातिपुष्टः ॥
सुकृत्रिमश्चेति भिदाः क्रमेण नदस्य शब्दे घञि नाद उक्तः ॥१८॥
हृत्कंठमूर्धाश्रयगः क्रमेण त्रैविध्यमृष्येद्व्यवहारतोऽयम् ॥
मंद्रश्च मध्याव्हयकश्च तारः पूर्वात्परः स्याद्द्विगुणः क्रमेण ॥१९॥
ऊर्ध्वस्थितायां हृदि नाडिकायां नाड्यस्तिरश्च्यः पवनाहतास्ताः ॥
द्वाविंशतिस्तीक्ष्णतराः क्रमेण नादं तु तावच्छ्रुतितां नयंति॥२०॥
कंठप्रदेशेऽप्यथ मूर्धदेशे द्वाविंशतिः स्युः श्रुतयस्तथैव ॥
स्वराः श्रुतिभ्यः प्रभवंति ते तु षड्जादयः सप्त यथाक्रमेण ॥२१॥
वेदाऽग्निपक्षाऽब्धिपयोधिवन्हिपक्षांतिमश्रुत्यधिसंश्रिताः स्युः॥
षड्जाभिधानस्त्वृषभस्ततः स्याद्गांधारको मध्यमपंचमौ च ॥२२॥
ततः परं धैवतको निषाद इति स्वराः सप्त मता मुनींद्रैः ॥
सरी गमौ पश्च धनी क्रमेणेत्येषां स्वराणामभिधाः पराः स्युः॥२३॥
श्रुतेश्च नैरंतरभाविको यः स्निग्धोऽनुशब्दात्मक ओजसात्मा ॥
श्रोतुर्मनोरंजनकारकत्वात्स्वतस्तु तज्ज्ञैरुदितः स्वरोऽसौ ॥ २४ ॥
क्रमान्मयूराव्हयचातकाजक्रौंचाभिधाः कोकिलदर्दुराख्यौ ॥
मतंगजश्चामलमुद्धरंति षड्जादिकानित्युदितं मुनींद्रैः ॥ २५ ॥
शुद्धाः स्वरा ये तु भवंति सप्त तज्ज्ञान्विकारान्प्रवदामि सप्त ॥
स्वोपांतिकश्रुत्यधिसंश्रितः स्यात् षड्जाभिधानो लघुषड्जनामा ॥२६॥
एवं मपौ स्तो लघुशब्दपूर्वौ साधारणो गः प्रथमश्रुतिस्थः ॥
मस्य द्वितीयश्रुतिगोंऽतरः स्यात् षड्जाव्हयस्य प्रथमश्रुतिस्थः ॥२७॥
तथा द्वितीयश्रुतिवर्तमानो निःकैशिकी काकलिनामधेयः ॥
स्वस्थानकस्थेषु च तेषु नेष्टाः स्वरेषु भेदा विकृता मुनींद्रैः ॥२८॥
नोपाददे धस्य विकारभेदं निशंकसूरिः खलु कूटताने ॥
सर्वे युतास्ते विकृताश्च शुद्धाश्चतुर्दशैवेति मतं मदीयम् ॥२९॥

अथो रिधावाद्यगनिश्रुतिस्थौ लक्ष्येषु वेदश्रुतिकौ भवेताम् ॥
मः पंचमाद्यां श्रुतिमेत्य लक्ष्ये क्वचिच्च पंचश्रुतितां प्रयाति ॥ ३० ॥
चतुर्दशानां गदितस्वराणां कियत्सु रागेषु भवेयुरेते ॥
ननु स्वरस्य श्रुतितः पृथक्त्वं त्वया यदुक्तं न तथाऽत्र युक्तम् ॥३१॥
साद्यश्रुतेः कैशिकिनेश्च भेदः कुतस्तथाऽन्यश्रुतितः स्वराणाम् ॥
यथेश्वरप्रेरितवातचक्रघातात्प्रभूतध्वनिरेव नाड्याम् ॥ ३२ ॥
प्राग्घातमात्रश्रवणाच्छ्रुतिश्चानुध्वानरूपः स्वर इत्यकिंचित् ॥
यैर्जातयः पंच मताः श्रुतीनां ते तु प्रमाणं प्रवदंति तत्र ॥ ३३ ॥
चतुर्विधास्ते तु भवंति साद्या वादी च संवादिविवादिनौ च ॥
तथानुवादीति मताः स वादी स्वरः प्रयोगे बहुलत्वमेति ॥ ३४ ॥
यदंतरेऽष्टश्रुतयो द्विषड्वा संवादिनौ तौ ननिमावथश्च ॥
एकश्रुतेरंतरितौ स्वरौ यौ विवादिनौ तौ तु मिथः सदा स्तः ॥ ३५ ॥
शेषस्वराणामनुवादिता स्यादन्वर्थनामान इमे भवेयुः ॥
ग्रामः स्वराणां गदितः समूहो यो मूर्छनाद्याश्रयतां प्रपन्नः ॥ ३६ ॥
षड्जः स्वराणां जनको यतः स्याद्ग्रामस्ततो मुख्यतयैव एषः ॥
रागेषु सग्रामजनित्वमेव दृष्टं ततो ग्रामयुगं नहीष्टम् ॥ ३७ ॥
आरोहणं च क्रमतोऽवरोहः सप्तस्वराणामिति मूर्छनोक्ता ॥
ताः सप्त मध्यस्थितषड्जपंक्तावधस्तनैर्न्यादिभिरेव तत्र ॥ ३८ ॥
संसारणीयास्तु यथाक्रमेण षड्जादिकाद्याः पुरतो भवेयुः ॥
यां मूर्छनां यावतिथश्च षड्जः श्रयेद्धि सा तावतिथत्वमेति ॥ ३९ ॥
षड्जादिमा तूत्तरमंद्रिकाद्या निषादपूर्वा रजनी द्वितीया ॥
धाद्युत्तराद्यायतिका तृतीया तुर्या च पूर्वापिच शुद्धषड्जा ॥ ४० ॥
मादिस्तथा पंचममूर्छना तु नाम्ना कृतामत्सरि पूर्विकेति ॥
गादिस्तु षष्ठी गदितेति नाम्नाऽश्वक्रांतिका याद्यभिरुद्गतांत्या ॥४१॥
ता मूर्छनाः षाडवितीकृताश्च क्वचित्तथैवौडवितीकृताः स्युः ॥
ताः शुद्धतानाः कथिता मुनींद्रैः सर्वेषु रागेषु विचारणीयाः॥४२॥

तानस्य तंत्र्यां द्विविधा क्रिया स्यात्प्रवेशतो निग्रहतस्तथैव ॥
पूर्वप्रकर्षोत्तरमार्दवस्तु प्रवेशकोऽस्पर्शकनिग्रहः स्यात् ॥ ४३ ॥
इति प्रगीता भरतादिभिश्च गीतोपयोगात्किल मूर्छनास्तु ॥
ता व्युत्क्रमोच्चारयुतस्वरास्तु पूर्णा अपूर्णा अपि कूटतानाः ॥ ४४ ॥
न्यस्य क्रमं स्थापय पूर्वपूर्वस्वरं पराधः स यदाग्रवर्ती ॥
तत्पूर्वमस्योपरिगान्पुरः प्राङ्मूलक्रमस्य क्रमतस्तु शेषान् ॥ ४५ ॥
एकादिकांकान्विलिखेत्तु सप्त पूर्वेण पूर्वेण परे परेऽत्र ॥
हते क्रमेण प्रतिमूर्छनंस्यात्संख्या तदैकस्वरपूर्वकाणाम् ॥ ४६ ॥
ये मूर्छनांत्यस्वरसंस्थितांकास्तान् पातयेत्प्रश्नसमुत्थितांकैः ॥
शेषान् यथार्हं हननप्रपञ्चैः पूर्वस्वरांकैश्च यथाक्रमेण ॥ ४७ ॥
येनाहतिस्तावतिथः स्वरः स्याद्धतेरभावेऽगणनीयलब्धिः ॥
प्रोक्तं द्वितीयाद्गणनं तथैव श्रीविठ्ठलोऽभाषत नष्टसिद्धिम् ॥ ४८ ॥
गीतादिवर्ती ग्रह ईरितश्च स्वरः प्रयोगे बहुलोंऽशनामा ॥
विदारिकायाश्च समापको योऽपन्यासनामाभिध ईरितोऽसौ ॥ ४९ ॥
विच्छिद्य विच्छिद्य कृतः प्रयोगो यः स्याद्विदारीत्युपगीयते च ॥
न्यासः स गीतस्य समाप्तिकृत्स्यादेते तु सर्वत्र भवंति रागे ॥ ५० ॥
सर्वत्र षड्जो ग्रह एव रागे रक्त्यैकहेतोर्निधपादयो ये ॥
वर्णाः प्रयोज्या न तु ते स्वराश्च ता मूर्छनाः षड्जभवा ह्यशेषाः ॥५१॥
गानक्रिया वर्ण इति प्रदिष्टो बुधैर्भवेदेष चतुर्विधस्तु ॥
स्थायी तथाऽऽरोह्यवरोहिणौच संचारिनामेत्यथ लक्ष्म वक्ष्ये ॥५२॥
एकस्वरस्यैव कृतः प्रयोगो विश्रम्य विश्रम्य भवेत्स आद्यः ॥
वर्णौ द्वितीयोऽथ तृतीयकस्तोऽन्वर्थाभिधौ मिश्रणतश्चतुर्थः ॥ ५३ ॥
विशिष्टवर्णौघ उदीर्यते चालंकारकस्तत्र च रूपभेदाः ॥
नोदीरिता विस्तरशंकितेन कतिप्रसिद्धानभिवर्णयामि ॥ ५४ ॥
स्यादादिमांत्यस्वर एक एव येषाममी स्थायिनि संस्थितास्ते ॥
प्रसन्नपूर्वोऽतगतप्रसन्नः प्रसन्नपूर्वांतकनामधेयः ॥ ५५ ॥

प्रसन्नमध्यः क्रमरेचिताख्यः पंचेत्यमी स्थायिनि संस्थिताः स्युः ॥
यो मूर्छनायां प्रथमस्वरस्तु मंद्रोऽधिकारेऽत्र निरूपितोऽसौ॥५६॥
तारस्तु मंद्राद्द्विगुणः प्रयुक्तो मध्यस्तु यस्तद्द्वयमध्यगो वा ॥
मंद्रः प्रसन्नो मृदुनामधेयस्तारस्तु दीप्तोऽथ लिपौ खमूर्धा॥५७॥
मंद्रस्तु तारः स्थिरऊर्ध्वरेषस्तथा त्रिरुक्तेः प्लुतनामधेयः ॥
मंद्रद्वयाद्दीप्तपुरःस्थिते तु प्रसन्नपूर्वं प्रवदंति तज्ज्ञाः ॥ ५८ ॥
तद्वैपरीत्येंऽतगतप्रसन्नः प्रसन्नयोर्मध्यगते तु तारे ॥
प्रसन्नपूर्वांतकनामधेयोऽलंकारकोऽसौ मुनिनोपदिष्टः ॥ ५९ ॥
मंद्रे तु मध्यद्वयमध्ययाते प्रसन्नमध्यं प्रवदंति धीराः ॥
स्यान्मूर्छनायाः प्रथमस्वरश्चेदंतद्वितीयोऽपि तदा कलैका ॥६०॥
द्वितीयतुर्यावथ मध्यगौ चेत्तदा द्वितीया कथिता कलैषा ॥
अंतर्यदा पंचममुख्यकाः स्युस्त्रयस्तृतीया तु कला तदा स्यात् ॥
कलात्रयेणेति बुधैः प्रगीतोऽलंकारकोऽयं क्रमरेचिताख्यः ॥६१॥

इति स्थायिगतालंकाराः ।

विस्तीर्णनामा त्वथ संनिकर्षः प्रेंखाख्यबिंदू हसिताभिधानः ।
प्रच्छादनाक्षिप्तकनामधेयावारोहिगाः सप्त मता मुनींद्रैः ॥६२॥
यन्मूर्छनादेः स्वरतः क्रमेण विश्रम्य विश्रम्य विलंबवद्भिः ॥
स्वरैर्यदारोहणमादधाति विस्तीर्णनामाभिहितस्तदाऽयम् ॥६३॥
ह्रस्वैः स्वरैर्द्विर्द्विरुदीरितैश्च निरंतरैः संनिपदादिकर्षः ॥
यत्र स्वरद्वंद्वमुदीर्य पूर्वपूर्वोपयुक्तं स्वरमग्रसंस्थम् ॥ ६४ ॥
आंदोल्यमानं च यथाक्रमेणारोहेदसौ प्रेंखकनामधेयः ॥
प्लुतं तथा ह्रस्वमपि प्लुतं च ह्रस्वं प्लुतं ह्रस्वमथ प्लुतं च ॥ ६५ ॥
कुर्वन् स्वरं याति यथाक्रमेणारोहेत्तदा बिंदुरुदीर्यतेऽसौ ॥
स्वरेषु चैकोत्तरवर्धिताभिरावृत्तिभिर्यर्हि समीरितेषु ॥ ६६ ॥
आधत्त आरोहमनुक्रमेण धीरास्तदाहुर्हसिताभिधानम् ॥
स्यात् त्रिस्वराद्या तु कला तथान्ये द्वे पूर्वपूर्वांतिकपूर्विके स्तः॥६७॥

त्रित्रिस्वरे यत्र कले स सद्भिः प्रच्छादनाख्यः कथितस्तदानीम् ॥
एकांतरोच्चारयुतस्वरेषु पूर्वान्वितत्वेन पुरःस्थितस्य ॥ ६८ ॥
आरोहणं स्यात्तु यथाक्रमेण यदा तदाक्षिप्तक उच्यतेऽसौ ॥
आरोहणे लक्षितसप्तभेदा विलोमकेऽपि क्रमतो भवेयुः ॥ ६९ ॥

इत्यारोह्यवरोह्यलंकाराः ।

प्रसादकः प्रेक्षकरंजिताख्यावुत्क्षेपनामा परिवर्तकश्च ॥
निष्कूजितोद्घाहितरेचिताख्या हुंकारकाख्यो ललितक्रमश्च॥७०॥
श्येनस्ततो ह्लादपदादिमानः संचारिगाश्चाग्निहिमांशुसंख्याः ॥
चेत्पूर्वपूर्वः क्रियते स्वरस्य परस्य चोर्ध्वाधरतः प्रसादः ॥७१॥
गतागतं संदधती कला चेत्सा द्विस्वरैकैकविवर्जितेन ॥
भवेयुरन्याश्च कलास्तदानीं प्रेक्षाव्हयोऽसौ कथितः कवींद्रैः॥७२॥
द्विरुक्तमंद्रांतकला तथैव मंद्रादितोऽन्या यदि रंजितः स्यात् ॥
चेत्पूर्वपूर्वन्यसनोर्ध्वलंभस्तु क्षेपकस्त्रिस्वरवत्कलासु ॥ ७३ ॥
गीत्वा प्रसादस्य कलां कलादेस्तृतीयमेत्यादिमगानतः स्युः ॥
यदा तदा लोकमनोभिरामं निष्कूजिताख्यं प्रवदंति धीराः॥७४॥
गीत्वा स्वरांस्त्रीनवरुह्य चैकं पराः कला यत्र भवंति गीताः ॥
एकैकरिक्ता विहितः स एषोऽलंकार उद्घाहितनामधेयः ॥७५॥
चेद्विस्वरी पूर्वकला भवेयुः पूर्वेण चैकोत्तरवर्धमानैः ॥
स्वरैर्गतिं चागतिमादधानैर्हुंकारनामा कथितस्तदाऽयम् ॥७६॥
प्रयुज्य मंद्रादिकलां द्विरुक्तपरस्वरेणोपगताममीषु ॥
स्वरेषु दध्यादवरोहणं चेत्तदा मतोऽसौ स्खलिताभिधानः॥७७॥
पक्षत्रिवेदस्वरवत्कलाश्चेत्क्रमेण तिस्रः प्रथमस्वराद्याः ॥
तथा द्वितीयादिकपूर्विकाः स्युर्भवेत्तदैष क्रमनामधेयः ॥ ७८ ॥
स्वरैः सपूर्वैश्च यथाक्रमेण श्येनस्तु संवादिकयुग्मकैः स्यात् ॥
मंद्रांतमंद्रादिकलास्तु यत्र स ह्लादमानाव्हयकः प्रणीतः ॥७९॥
संचार्यलंकारगणः प्रयुक्त आरोहतः सोऽप्यवरोहतः स्यात् ॥

वालप्रबोधाय कियत्प्रणीता बुधैर्यथेष्टं परिकल्पनीयाः ॥ ८० ॥
ज्ञानं स्वराणामथ रक्तिलाभो वर्णांगवैचित्र्यमलंकृतेः स्युः॥८१॥

श्रुतिकलितसुनादस्थानसर्वस्वराणां
विमलतरसुवर्णालंकृतीनां च भेदम् ॥
भुविसुजननिवासग्रामतानादिकानां
नृपवरबुरहानेनात्र निर्णीतमेव ॥ ८२ ॥

इति श्रीकर्णाटजातीयपुंडरीकविठ्ठलविरचिते सद्रागचंद्रोदये
स्वरप्रसादः समाप्तः ।

## अथ वीणाप्रकरणम्

अथ स्वरा येऽत्र मताश्च भेदा ग्रहादयो वर्णगता विशेषाः ॥
वीणाश्रया व्यक्तिरतो ह्यमीषां वीणास्वरूपं प्रतिपादयामि ॥१॥
दंडे रमेशोऽत्र तदीयभार्या तंत्र्यां महेशः ककुभेऽप्युमा स्यात्॥
पत्र्यां तु तुंबे कथितो विधाता नाभौ सरस्वत्यपि दोरके तु॥२॥
नागेश्वरः शीतकरश्च जीवे सार्यां प्रदिष्टो दिवसाधिनाथः ॥
तथाऽश्विनौ कीलयुगे तु मेरौ देवाधिपो देवमयीति वीणा॥३॥
नरं महापातकिनं पुनाति दृष्टा तदा हस्तगता पुनः किम् ॥
यस्मात् कपालिप्रियतां प्रपन्ना तद्रुद्रवीणां कथयंति संतः ॥४॥
श्रुतिस्मृतिभ्यां प्रतिपादिता या करे कृता ब्रह्मसुतादिभिश्च ॥
वीणा चतुर्वर्गनिदानभूता तत्त्वेन वेद्या कविभिः प्रयत्नात् ॥५॥
विशुद्धमेलाव्हयिका च मध्यमेलाभिधाना द्विविधेति वीणा ॥
समंत्रिषड्जो यदि पूर्वसंस्थो वीणोर्ध्वगामुक्तकतंत्रिकासु ॥६॥
स्याच्छुद्धमेला पमयोश्च तद्वदेकैकमुख्याच्च तु मध्यमेला ॥
प्रत्येकमेते द्विविधे भवेतां स्याद्रागमेलाऽखिलपूर्विकैका ॥ ७ ॥
द्वितीयिकैकोपपदा तथैव तत्र प्रवक्ष्याम्यथ लक्षणानि ॥
स्थानेषु या मंद्रपरादिकेषु स्वरैरशेषैः सहवर्तमाना ॥ ८ ॥

यदा तदा साखिलरागमेलाव्हयोपदिष्टा च चतुर्मुखाद्यैः ॥
एकैकरागप्रतिमेलनं स्यान्मध्ये च तारे तु यदा स्वराणाम् ॥९॥
एषोपगीयेत तदैकरागमेलाभिधा रागविदां वरिष्ठैः ॥
लक्ष्यप्रवीणेन विनिर्मितायां सुवीणिकायामुपरि प्रदेयाः ॥ १० ॥
तंत्र्यश्चतस्रोऽयस एव पार्श्वेऽधो दक्षिणे तिस्र इमा निवेश्याः ॥
पुरोदितानामुपरिस्थितानां वामप्रदेशाश्रितपूर्वतंत्र्याम् ॥ ११ ॥
षड्जं निदध्यादनुमंद्रसंज्ञं द्वितीयतंत्र्यामनुमंद्रपं च ॥
तृतीयतंत्र्यामपि मंद्रषड्जं चतुर्थतंत्र्यामथ मंद्रमाख्यम् ॥ १२ ॥
त्रितंत्रिकाणामधराश्रितानामाद्या तु मध्यस्थितषड्जकेन ॥
तंत्री समानश्रुतिरेपितव्या द्वैतीयिका मंद्रकपेन तद्वत् ॥ १३ ॥
तार्तीयिका मंद्रकषड्जकेन तिस्रो ह्यमूः स्युः श्रुतिनामधेयाः ॥
सारीनिवेशं च निरूपयामि यो वैणिकानामभिसंमतः स्यात्॥१४॥
आद्यानुमंद्राव्हयषड्जतंत्र्या शुद्धो यथा स्यादृषभस्तथाद्या ॥
सारी निवेश्येत तथा द्वितीया तंत्र्या तया शुद्धगसिद्धिहेतोः॥१५॥
सारी तृतीयापि तथैव तंत्र्याधीयेत साधारणगस्य सिध्यै ॥
सारी चतुर्थी लघुमध्यमस्य सिध्यै तया तंत्रिकया तथैव ॥१६॥
तंत्र्या तया पंचमसारिका च निधीयते शुद्धमसाधनाय ॥
सारी निवेश्या च तथैव षष्ठी तंत्र्या तयैवं लघुपाव्हयाय ॥१७॥
अथ त्रितंत्रीभिरनुक्रमेण पराभिरासूदितसारिकासु ॥
स्वरान् प्रभूतानभिवर्णयामि येनानुमंद्रेण समाश्रिता या ॥१८॥
द्वितीयतंत्र्योज्वलधैवताख्यः शुद्धो निषादाव्हयकः पुरस्तात् ॥
स्यात् कैशिकी निर्लघुषड्जकश्च शुद्धः सनामार्षभको विशुद्धः ॥१९॥
स्वराः प्रभूता इति षड् भवंति षट्सूक्तसारीषु यथा क्रमेण ॥
द्वितीयतंत्र्या जनितौ विशुद्धौ सरी प्रयोगे न च रक्षणीयौ ॥२०॥
तृतीयया तंत्रिकयाऽपि यस्मान्मंद्रौ विशुद्धौ जनितौ पुनस्तौ ॥
एतेऽनुमंद्राः कथिता मया च मंद्रस्वरांस्तानधुना ब्रवीमि ॥२१॥

तृतीयया मंद्रसयुक्ततंत्र्यानुमंद्रवत् षट्स्वपि सारिकासु ॥
भवंति ते तु क्रमतोऽथ तत्र तृतीयतंत्र्योज्वलमध्यमश्च ॥२२॥
लघ्वादिकः पंचमकोऽप्रयोगौ चतुर्थतंत्रीजनितौ पुनर्यत् ॥
मंद्रेण मेनान्वितया चतुर्थ्या तंत्र्या भवेयुः क्रमशः स्वरास्ते ॥२३॥
सारीषु षट्सु प्रतिपादितोऽसौ लघ्वादिकः पंचमनामधेयः ॥
विशुद्धपो धैवतकोऽपि शुद्धः शुद्धो निषादाव्हयकः पुरस्तात् ॥२४॥
स्यात्कैशिकी निर्लघुषड्जनामा मंद्रस्वराः संगदिता मयैते ॥
तंत्रीचतुष्केण पुरोदितासु सारीषु षट्सु प्रथिताः स्वरा ये ॥२५॥
सर्वेऽनुमंद्राव्हयकाश्च मंद्राः स्वयंभुवो न स्वधिया निबद्धाः ॥
प्रमाणयुक्ताः सकलस्वरास्ते नैवान्यथा कश्चन कर्तुमीशः ॥२६॥
हीनाधिकैकैकश्रुतिस्वरा ये मंद्रानुमंद्राश्रिततारसंस्थाः ॥
न दोषवंतस्त्वतिदुर्ग्रहं तदसंप्रदायाश्रितपंडितानाम् ॥२७॥
संवादिनो योजय सर्वतस्तु स्वस्वप्रमाणादिति मध्यतोऽपि ॥
तारेऽतितारे च निवेशनीयाः सार्यो यथायोगमिमाः सुधीभिः ॥२८॥
मध्यादिकस्थानकसारिकासु तुरीयतंत्रीजनितग्रहाख्याः ॥
स्वराः प्रयोज्या न तु भिन्नतंत्रीत्रयोद्भवा गीतविचक्षणेन ॥ २९ ॥
चतुर्दशोक्ता ननु पूर्वमेते स्वरास्ततो द्वादशसंख्यकानाम् ॥
सारीनिवेशः क्रियते भवद्भिः कुतोऽतरे काकलिनि द्वयोर्न ॥३०॥
अत्रोच्यते काकलिनोऽतरस्य पंक्तौ प्रयुज्यां यदि सारिके द्वे ॥
संकीर्णभावान्न तदानुकूल्यं स्याद्वादनेऽतो न कृते पृथक्ते ॥३१॥
तयोः समुत्पत्तिरुदीर्यते तु चेत्प्रस्तुतस्तत्सहितोऽपिरागः ॥
लघ्वाख्ययोः षड्जमयोश्च सार्यौ स्यातां यदैकैकश्रुतेर्विहीनौ ॥३२॥
तदाच काकल्यभिधांतरौ स्तः किंत्वत्र सूक्ष्मध्वनिभेदविज्ञाः ॥
लघ्वादिकं सं लघुमध्यमं च तत्प्रातिनिध्येन वदंति लक्ष्ये ॥३३॥
चतुःश्रुतित्वं रिधयोर्यदेतत्पंचश्रुतित्वं त्वथ मध्यमस्य ॥
यदा भवेत्प्रस्तुतरागवर्ति तदानुकूल्यां कुरु यंत्रसारीम् ॥३४॥

विशुद्धमेला विहितेति वीणा त्वस्यां प्रभेदत्रयमन्यदस्ति ॥
द्वितीयतुर्योर्ध्वगतंत्रिजन्योः स्याद्विपरीत्यात्पमयोस्तदैका ॥३५॥
अत्रानुमंद्राव्हयषड्जतंत्र्यां मपौ चतुस्त्रिश्रुतिकावयोगौ ॥
पतंत्रिका मध्यमरंजितान्या तत्राब्धिरामश्रुतिकौ मपौ स्तः ॥३६॥
सयुक्ततंत्र्यां जनितावयोगौ परा मतंत्री पयुता तथैव ॥
शुद्धौ सरी पंचमतंत्रिकोत्थौ तदा प्रयोगे न च रक्षणीयौ ॥३७॥
उक्ता विशुद्धाव्हयमेलभेदा या मध्यमेला परिलक्ष्यतेऽथ ॥
विशुद्धमेलाव्हयवीणिकायामेवोपरिष्टाद्गततंत्रिकासु ॥३८॥
आद्यानुमंद्राव्हयपंचमेन युता द्वितीया यदि मंद्रसेन ॥
तंत्री तृतीयात्वथ मंद्रपेन तुरीयतंत्री यदि मध्यसेन ॥३९॥
यदोपरिष्टाद्गततुर्यतंत्र्या पार्श्वत्रितंत्रीषु समश्रुतित्वम् ॥
शुद्धौ सरी पाव्हयतंत्रिकोत्थौ धीरैः प्रयोगे न च संप्रयोज्यौ ॥४०॥
स्यान्मध्यमेलेयमिति प्रयुक्ता किंत्वत्र भेदोऽपर एव चास्ति ॥
पतंत्रिकास्थानमयोजिता स्यात्तत्राब्धिरामश्रुतिकौ मपौ यौ ॥४१॥
सतंत्रिकायां जनितावयोगौ पार्श्वत्रितंत्रीश्रुतितापि तद्वत् ॥
तुरीयतंत्रीजनितौ स्वरौ यौ लोप्यौ तु तौ नैव कदाचिदत्र ॥४२॥
नादस्य मंद्राज्जनिरुक्तपूर्वा स्याद्विपरीत्येन विपंचिकायाम् ॥
अथ स्वराणां विकृतप्रभेदा यै रागमेला जनिताः क्रमेण ॥४३॥
सुविस्तरं प्रस्तरणाय तेषां युक्तिं सुबोधामुपवर्णयामि ॥
सगौ मपौ निश्च यथाक्रमेण श्रुतित्रयं यांति विकारलब्धौ ॥४४॥
पर्यायवृत्या विकृतैश्च तत्र व्यस्तैः समस्तैः प्रभवंति भेदाः ॥
किंतु स्वरा ये विकृताश्च लिप्यां वक्रोत्तमांगाः प्रकटीभवेयुः ॥४५॥
षड्जो यदा वैकृतिको भवेद्वा क्रमेण कार्यो निधयोर्विलोपः ॥
एवं गमौ स्तो विकृतौ पनी च स्वपूर्वशुद्धान् क्रमतस्तु लुंपेत् ॥४६॥
तत्रावधिः षड्जकपंचमार्वाक् श्रुतित्रये द्वित्वमवश्यमेषाम् ॥
यदा समौ पंचमको द्विरुक्ताः क्रमेण न स्यान्निगमद्विरुक्तिः ॥४७॥

यदैव सन्योर्युगपद्विकृत्यां भवेद्ध्रुवं धैवतकस्य लोपः ॥
गमौ विकारौ युगपद्यदा तु तदा सदा स्यादृषभस्य लोपः ॥४८॥
समध्यमः पंचमको द्विरुक्तो गांधारको वैकृतिकस्तु यत्र ॥
न स्याद्विरुक्तस्य गनामकस्य तत्रैव लोपस्त्वृषभस्वरस्य ॥४९॥
द्विधा द्विधा षड्जगमांतिकानां पस्य त्रिधा स्यात् क्रमतो विकृत्याम् ॥
चतुर्भिदाः स्युः सगयोर्विकृत्यां तथा चतुर्धा समयोर्विकृत्याम् ॥५०॥
रसप्रभेदाः सपयोश्च तद्वदेको हि सन्योर्गमयोस्तथैकः ॥
गपाविकृत्यां त्रिविधा चतुर्धा गन्योर्विकृत्यां मपयोर्द्विधा च ॥५१॥
मन्योश्चतुर्धा पनिषादयोः षट् द्विधा विकृत्यां सगमध्यमानाम् ।
षोढा विकृत्यां सगपंचमानां सगांतिके वैकृतिके द्विधा च ॥५२॥
भिदाश्चतस्रः समपाविकृत्यां द्विधा विकृत्यां समसप्तमानाम् ॥
त्रिधा विकृत्यां निपषड्जकानामेको विकृत्यां गमपंचमानाम् ॥५३॥
गमांतिके वैकृतिके तथा द्वौ गपांतिके स्युर्विकृतौ च षोढा ॥
मपांतिके वैकृतिके चतुर्धा द्विधा विकृत्यां सगमाख्यपानाम् ॥५४॥
एको विकृत्यां सगमांतिकानां त्रेधा विकृत्यां सगपांतिकानाम् ॥
द्विधा विकृत्यां समपांतिकानां द्वेधा विकृत्यां गमपांतिकानाम् ॥५५॥
एकैव पंचस्वपि वैकृतेषु, भेदा भवेयुः क्रमतश्च सर्वे ॥
क्रमेण चैकैकविकारवत्वे रुद्रप्रभेदाः प्रभवंति तत्र ॥५६॥
पंचाग्निभेदा द्विविकारतः स्युः पक्षाग्निभेदास्त्रिविकारतः स्युः ॥
दश प्रभेदास्तु चतुर्विकारादेको भवेत्पंचविकारतस्तु ॥५७॥
खांकैः कृता शुद्धसमन्वितानां संख्या भिदानां बुधविठ्ठलेन ॥
केचिद्विलुप्ताः कतिचिद्विरुक्ताः क्रमे स्वरा ये विकृतेर्वशात्तु ॥
मूलक्रमोच्चारममीषु वक्ति श्रीविठ्ठलः श्रीकरणैकधीरः ॥५८॥

## अथ मेलप्रकरणम्

मेलेषु सर्वेष्विह वर्णितेषु ज्ञानाय रागोद्भवनैकहेतून् ॥
मेला निदानीं विवृणोमि कांश्चित् पूर्वोक्तलक्ष्मान्वितवीणिकायाम् १

तत्राद्यमेलस्तु मुखारिकायास्ततो भवेन्मालवगौडमेलः ॥
श्रीरागमेलस्तदनंतरं स्यात्स्याच्छुद्धनट्टाव्हयकस्य मेलः ॥ २ ॥
देशाक्षिकाया अपि मेलकः स्यात्कर्णाटगौडस्य भवेत्सुमेलः ॥
केदारकाख्यस्य भवेत्सुमेलो हिजेजमेलोऽपि हमीरमेलः ॥ ३ ॥
कामोदरागाभिधकस्य मेलस्ततः सुतोड्याव्हयकस्य मेलः ॥
आभीरिकायाः सुमतश्च मेलो मेलो भवेच्छुद्धवराटिकायाः ॥ ४ ॥
स्याच्छुद्धरामक्रयभिधस्य मेलो देवक्रियायाश्च भवेत्तु मेलः ॥
सारंगमेलस्तदनंतरं स्यात्कल्याणमेलस्तु ततः पुरः स्यात् ॥ ५ ॥
हिंदोलरागस्य भवेत्तु मेलः स्यान्नादरामक्रयभिधस्य मेलः ॥
इतीरितास्ते नवचंद्रसंख्या एवं परांस्तान् कलयंतु तज्ज्ञाः ॥ ६ ॥

जन्यजनकरागस्वरनिरूपणम्

सप्तस्वरा यत्र भवंति शुद्धा मुखारिकायाः कथितः स मेलः ॥
मुखारिकामेलसमुद्भवास्तु मुखारिकाद्याः प्रभवंति केचित् ॥
न्यासांशसा सग्रहसंयुता सा पूर्णा मुखारी क्रियते सदैव ॥
इति मुखारी ॥

शुद्धौ सरी मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
लघ्वादिकौ षड्कमध्यमौ चेत्तदा भवेन्मालवगौडमेलः ॥
मेलादतो मालवगौडनामा गौडक्रिया गुर्जरिका च टक्कः ॥
पाडी कुरंजी बहुली च पूर्वी रामक्रिया द्राविडगौडनामा ॥
गौडी च बंगालकनामधेयस्त्वासावरी पंचमरेवगुप्ती ॥
मंजर्यपि स्यात्प्रथमादिरेषा कर्णाटबंगालविशुद्धगौडौ ॥
स्याच्छुद्धपूर्वो ललितश्च देवगांधारको मारविकादयस्तु ॥
न्यंशग्रहान्तो रिपवर्जितो वा सायं भवेन्मालवगौड एषः ॥
इति मालवः ॥

सांशग्रहा सांतयुता धरिक्ता गेया पुनर्गौडकृतिः प्रभाते ॥
इति गौडकृतिः ॥

न्यंशग्रहान्ता ससमुद्रिता वा स्याद्गुर्जरी प्रातरियं विगेया ॥

इति गुर्जरी ॥

सांशग्रहांतोऽन्तरकाकलीकः पूर्णोऽत्ययामे क्रियते हि टक्कः ॥

इति टक्कः ॥

साशान्तिका सग्रहणी गरिक्ता स्यात्पाडिका तूदयमेति सायम् ॥

इति पाडी ॥

सांशांतिका सग्रहणी कुरंजी धाल्पा प्रयोगे विहिता सदैव ॥

इति कुरंजी ॥

मांशग्रहांता गनिवर्जिता वा नवा विगेया वहुली पराह्ले ॥

इति बहुली ॥

सांशांतिका सग्रहिका च पूर्णा स्यात्पूर्विका सा दिनतुर्ययामे ॥

इति पूर्वी ॥

सांशग्रहांता मनिवर्जिता च सा स्यात्तु रामक्र्यभिधा सदैव ॥

इति रामक्रीः ॥

न्यंशग्रहातः सकलस्वरश्च स्फुरत्सपो द्राविडगौडकः स्यात् ॥
सायंतनः कैश्चिदपीरितोऽसौ सालंगको वा गुणकर्यपीति ॥

इति द्राविडगौडः ॥

सांशग्रहा सांतवती धगाभ्यां रिक्ता दिनान्ते विहिता तु गौडी ॥

इति गौडी ॥

सांशग्रहांतः सकलस्वरश्च सदैव वंगालकनामकः स्यात् ॥

इति वंगालः ॥

मांशग्रहा मांतवती च पूर्णा ह्यासावरी शश्वदसौ नियुक्ता ॥

इत्यासावरी ॥

पांशांतिकः पग्रहको रिरिक्तोऽसौ पंचमः प्रातरुपैति जन्म ॥

इति पंचमः ॥

न्यासांशरी रिग्रहिका विगेया स्याद्रेवगुप्तिस्त्वसपा दिनान्ते ॥

इति रेवगुप्तिः ॥

पांशग्रहन्यासयुता सदैव मंजर्युपास्या प्रथमादिरेषा ॥

इति प्रथममंजरी ॥

साशग्रहांतो रिविवर्जितश्च कर्णाटबंगाल उषस्युपात्तः ॥
इति कर्णाटबंगालः ॥
न्यंशग्रहांतश्च पवर्जनीयः शुद्धादिको गौड इतिप्रशस्तः ॥
इति शुद्धगौडः ॥
सांशांतिकः सग्रहकः परिक्तः प्रातस्तु शुद्धो ललिताभिधानः ॥
इति शुद्धललितः ॥
साशग्रहः सांतयुतश्च पूर्णः स्याद्देवगांधारक एष नित्यम् ॥
इति देवगांधारः ॥
सांशग्रहांता रिधवर्जिता च निरूप्यते मारविका सदैव ॥
इति मारविका ॥
इति मालवगौडमेलः ॥

चतुःश्रुतीं यत्र रिधौ भवेतां साधारणो गोऽपि च कैशिकी निः ॥
तथा विशुद्धाः समपा भवंति श्रीरागकस्याभिहितः स मेलः ॥
श्रीरागकोऽस्मादपि मालवश्रीधन्नासिका भैरविका तथैव ॥
अन्येऽपि रागाः कतिचित्प्रसिद्धा भवंति सैंधव्यभिधादयश्च ॥
सांशग्रहांतो धविवर्जितो वा श्रीरागनामाऽस्तमिते रवौ स्यात् ॥
इति श्रीरागः ॥
सांशग्रहा सांतयुता रिधाल्पा पूर्णा सदा राजति मालवश्रीः ॥
इति मालवश्रीः ॥
षड्ग्रहांता रिधवर्जितेष्टा धन्नासिका सांशवती प्रभाते ॥
इति धन्नासी ॥
सांशग्रहांता रिपमुद्रिता च पूर्णा सदा भैरविका विगेया ॥
इति भैरवी ॥
सांशग्रहांता त्वरिपा सदैव स्यात्सैंधवी सद्गमकैर्लसंती ॥
इति सैंधवी ॥
इति श्रीरागमेलः ॥

निगौ यदा त्रिश्रुतिकौ भवेतां लघ्वादिकौ षड्कमध्यमौ च ॥
तथा विशुद्धाः समपा भवंति विशुद्धनट्टाह्वयकस्य मेलः ॥

विशुद्धनट्टाह्वयमेलकेऽपि विशुद्धनट्टप्रमुखा भवंति॥
सांशग्रहांतः सकलस्वरश्च स्याच्छुद्धनट्टोऽहनि तुर्ययामे ॥
इति शुद्धनट्टः ॥

इति शुद्धनट्टमेलः ॥

लघ्वादिकौ षड्जकमध्यमौ चेद्गांधारकस्त्रिश्रुतिकस्तथा स्यात् ॥
शुद्धा भवेयुः समपा निषादो देशाक्षिकाया गदितः स मेलः ॥
देशाक्षिकामेलसमुद्भवाश्च देशाक्षिकाद्याः कतिचिद्भवंति ॥
गांशग्रहां तामनिमध्यमां वा देशाक्षिकां प्रातरवैहि पूर्णाम् ॥
इति देशाक्षी ॥

इति देशाक्षीमेलः ॥

शुद्धौ समौ पंचमको विशुद्धः शुद्धो निषादो लघुमध्यमश्च ॥
निगौ यदा त्रिश्रुतिकौ भवेतां कर्णाटगौडस्य तदैष मेलः ॥
कर्णाटगौडोऽपि तुरुष्कतोडी विशुद्धबंगालकनामधेयः ॥
छायादिको नट्टकनामधेयः सामंतकाद्याः प्रभवंत्यमुष्मात् ॥
न्यंशग्रहांतो रिधवर्जितो वा पूर्णस्तु कर्णाट इनास्तशोभी ॥
इति कर्णाटः ॥

मांशग्रहा मांतवती च पूर्णा मन्याहतां पंचमकंपयुक्ता ॥
सहस्ररश्मेरुदये विरेजे तुरुष्कतोडीयमुदीर्यमाणा ॥
इति तुरुष्कतोडी ॥

मांशांतको मग्रहकश्च पूर्णः स्याच्छुद्धबंगाल उषस्युपात्तः ॥
इति शुद्धबंगालः ॥

षड्जग्रहः सांतयुतश्च सांशोंऽतराश्रितः काकलिदीप्यमानः ॥
छायादिमः सायमसौ विगेयो नट्टाह्वयो गानविचक्षणेन ॥
इति छायानटः ॥

षड्जग्रहन्यासयुतश्च पूर्णः षड्जांशयुक्तोंऽतरकाकलीकः ॥
प्रयुज्यमानः स विभातकाले चकास्ति सामंतकनामधेयः ॥
इति सामंतः ॥

इति कर्णाटगौडमेलः ॥

लघ्वादिकौ षड्जकमध्यमौ च शुद्धौ समौ पंचमको विशुद्धः ॥
निगौ विशुद्धौ च यदा भवंति तदा तु केदारकमेल उक्तः ॥
केदारनारायणगौडकाख्यौ वेलावली शंकरभूषणाख्यः ॥
स्तो नट्टनारायणमध्यमादी मल्लारको गौंडकनामधेयः ॥
सालंगनट्टाभिधकश्च भूपालिका च सावेर्यभिधानिका च ॥
सौराष्ट्रिका नाम तथापि चान्ये कांबोजिकाद्याः प्रभवंत्यमुष्मात् ॥
न्यंशांतको निग्रहकोऽरिधो वा केदारकः सायमभीष्ट एषः ॥

इति केदारः ॥

गांशग्रहो गांतयुतो रिशून्यः प्रातस्तु नारायणगौडकः स्यात् ॥

इति नारायणगौडः ॥

धांशग्रहांता रिपवर्जिता वा वेलावली प्रातरसावभीष्टा ॥

इति वेलावली ॥

षड्ग्रहः सांतयुतोंऽशषड्जः सप्तस्वरो मुद्रितभूषितश्च ॥
सूर्योदयेऽयं समुदीर्यमाणो विराजते शंकरभूषणाख्यः ॥

इति शंकराभरणः ॥

षड्ग्रहः सांतयुतोंऽशषड्जो युतस्तु पूर्णोऽतरकाकलिभ्याम् ॥
विराजमानः सततं नियुक्तोऽसौ नट्टनारायणनामधेयः ॥

इति नट्टनारायणः ॥

मांशांतको मग्रहको रिधास्तः प्रातः प्रयुज्येत स मध्यमादिः ॥

इति मध्यमादिः ॥

धांशग्रहो धांतयुतोऽसपश्च मल्लारनामोषसि गीयतेऽसौ ॥

इति मल्लारः ॥

धांशांतको धग्रहकश्च पूर्णो विभातकाले च स गौंडरागः ॥

इति गौंडः ॥

सांशग्रहः सांतयुतश्च पूर्णः सालंगनट्टोऽहनि तुर्ययामे ॥

इति सालंगनट्टः ॥

गांशग्रहांता निमवर्जिता या भूपालिका प्रातरसौ विगेया ॥

इति भूपाली ॥

धांशग्रहांता सपवर्जनीया सावेरिका प्रातरियं नियोज्या ॥

इति सावेरी ॥

सांशग्रहा सांतयुताच पूर्णा सौराष्ट्रिका सायमियं विगेया ॥

इति सौराष्ट्री ॥

सांशग्रहा सांतवती मनिभ्यां समुज्झिता चांतरकाकलीष्टा ॥
कांबोजिका सा तु विगीयमाना विभातकाले नितरां विभाति ॥

इति कांबोजी ॥

इति केदारमेलः ॥

शुद्धौ सरी मध्यमपंचमौ च विशुद्धधो मो लघुशब्दपूर्वः ॥
निःकैशिकी चापि यदा तदा तु हिजेजरागस्यहि मेलकः स्यात् ॥
हिजेजमेलात्तु हिजेजकाख्योऽप्यन्ये तथा भैरवकादयः स्युः ॥
न्यंशग्रहांत्योंऽतरकाकलीकः पूर्णो हिजेजः क्रियते सदैव ॥

इति हिजेजः ॥

धांशग्रहन्यासयुतश्च पूर्णः प्रातः प्रयुज्येत स भैरवाख्यः ॥

इति भैरवः ॥

इति हिजेजमेलः ॥

शुद्धौ सगौ मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
लघ्वादिकौ षड्जकमध्यमौ चेत्तदा हमीराह्वयनट्टमेलः ॥

इति हमीरनट्टमेलः ॥

शुद्धौ धपौ पंचमको लघुश्च शुद्धौ सरी त्रिश्रुतिकौ निगौ च ॥
एवं यदा स्यात्स्वरमेलनं च तदा हि कामोदकमेल एषः ॥
मेलादतो येऽपि विशेषरागाः कामोदकाद्याः प्रकटीभवंति ॥
षड्जग्रहांशांतविराजमानः कामोदरागो दिवसांत्ययामे ॥

इति कामोदः ॥

इति कामोदमेलः ॥

शुद्धौ सरी मध्यमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
साधारणो गोऽपि च कैशिकी निस्तदा तु तोड्याह्वयकस्य मेलः ॥
तोड्यादयः केचन सिद्धरागा भवंति तोडीगतमेलतोऽपि ॥
मांशग्रहांता पधकंपयुक्ता तोडी भवेत्प्रातरसौ तु पूर्णा ॥

इति तोडी ॥

इति तोडीमेलः ॥

शुद्धौ सपौ शुद्धमधैवतौ च साधारणो गोऽपि च शुद्धगश्च ॥
षड्जाभिधानो लघुशब्दपूर्व आभीरिकाया गदितः स मेलः ॥
आभीरिकामेलसमुद्भवा ये आभीरिकाद्याः प्रभवंति केचित् ॥
षड्जग्रहा सांतवती च सांशाऽऽभीरी दिनांते जनिमेति पूर्णा ॥
इत्याभीरी ॥
इत्याभीरीमेलः ॥

शुद्धौ सरी शुद्धगपंचमौ चेत्तथोज्वलो धैवतनामधेयः ॥
लघ्वादिकौ षड्जकपंचमौ च मेलस्तदाशुद्धवराटिकायाः ॥
सांशग्रहा सांतवती च शुद्धवराटिकेष्येत सदैव पूर्णा ॥
इति शुद्धवराटी ॥
षड्जग्रहन्यासवती च सांशा सप्तस्वरा काकलिनोपयाता ॥
दिवानिशं राजति गीयमाना तद्वेदिभिः सामवराटिकासौ ॥
इति सामवराटी ॥
इति शुद्धवराटीमेलः ॥

शुद्धौ सरी शुद्धपधैवतौ चेन्मनामधेयो लघुपूर्वकश्च ॥
लघ्वादिकौ षड्जकपंचमौ चेद्विशुद्धरामक्रयभिधस्य मेलः ॥
मेलादमुष्माच्च विशुद्धरामकृतिस्तथा त्रावणिकाभिधाना ॥
देशीविभासौ ललितादयोऽपि प्रसिद्धरागाः प्रभवंति चान्ये ॥
सांशग्रहः सांतयुतश्च पूर्णो विशुद्धरामक्रयभिधो दिनस्य ॥
मध्यात्परं गीयत आख्ययैनं तथा जगुः केचन देशिकारम् ॥
इति शुद्धरामक्रीः ॥
सांशग्रहा सांतयुता च पूर्णा सा त्रावणी दीव्यति वासरांते ॥
इति त्रावणी ॥
न्यासाशरी रिग्रहणी परिक्ता प्रयुज्यते शश्वदसौ च देशी ॥
इति देशी ॥
सांशग्रहांतो ललितोऽपरोऽसौ सप्तस्वरः प्रातरसौ विगेयः ॥
इति ललितः ॥
इति शुद्धरामक्रीमेलः ॥

शुद्धौ समौशुद्धपनी तथैव लघ्वादिकौ षड्जकपंचमौ च ॥
पंचश्रुतिर्मश्च यदा भवेत्तु देवक्रियायाः कथितः स मेलः ॥
मेलादमुष्मात्कतिचित्तु रागा देवक्रियाद्याः प्रकटीभवंति ॥
षड्जग्रहः सांतयुतश्च सांशः समुज्झितः पंचमकेन वा स्यात् ॥
तुरीययामे दिवसस्य शुद्धवसंतको देवकृतिः सदैव ॥

इति देवक्रीः ॥

इति देवक्रीमेलः ॥

शुद्धौ सगौ मध्यमपंचमौ च लघ्वादिकौ षड्जकपंचमौ चेत् ॥
निःकैशिकी चापि यदा तदा स्यात्सारंगकस्याभिहितः स मेलः ॥
सारंगकाद्या जनिता भवेयुरनेन सारंगकमेलकेन ॥
सांशग्रहः सांतयुतश्च पूर्णः सारंगकः स्यादपराह्णशोभी ॥

इति सारंगः ॥

इति सारंगमेलः ॥

शुद्धौ सगौ शुद्धपधौ तथैव लघ्वादिकौ षड्जकपंचमौ च ॥
साधारणो गोऽपि यदा भवेयुः कल्याणकस्याभिहितः स मेलः ॥
कल्याणमेलात्प्रथिता भवंति कल्याणकाद्याः कतिचित्तु रागाः ॥
सांशग्रहः सांतयुतश्च पूर्णः कल्याणनामोदयमेति सायम् ॥

इति कल्याणः ॥

इति कल्याणमेलः ॥

शुद्धौ सरी शुद्धमपंचमौ च शुद्धस्तथा धैवतको यदि स्यात् ॥
गनी तथा त्रिश्रुतिकौ भवेतां तदातु हिंदोलक मेल उक्तः ॥
अतोऽपि हिंदोलवसंतकौ च केचित्प्रसिद्धाः प्रभवंति चान्ये ॥
सांशग्रहांतो रिपवर्जितश्च हिंदोलकः प्रातरुपैति जन्म ॥

इति हिंदोलः ॥

सांशांतकः सग्रहकश्च पूर्णो वसंतनामोषसि गीयतेऽसौ ॥

इति वसंतः ॥

इति हिंदोलमेलः ॥

शुद्धौ यदा षड्जकपंचमौ च शुद्धौ रिधौ मध्यमकोऽपि शुद्धः॥
साधारणो गो लघुषड्जकश्च स्यान्नादरामक्र्यभिधस्य मेलः ॥
यो नादरामक्र्यभिधो ह्यमुष्मादन्ये प्रसिद्धाः प्रभवंति केचित् ॥
सांशग्रहां सांतयुतां च नादरामक्रियां सायमुशंति पूर्णाम् ॥

इति नादरामक्रीः ॥

इति नादरामक्रीमेलः ॥

लक्ष्माणि रागेष्विति लक्षितानि क्रियंत उक्तानि विमृश्य दद्यात् ॥
न्यासग्रहांशेषु च पूर्णतायां श्रुतौ तथा षाडव औडवेऽपि ॥
सर्वत्र देशीगतरागवृंदे श्रीमद्धनूमान्नियमं न वव्रे ॥
रागाः शिवेन त्रिविधाः प्रयुक्ताः शुद्धाश्च सालंगगतास्तथैव ॥
संकीर्णकाश्चेति तदैव शुद्धो योऽनन्ययुक्तोऽप्यतिरंजकः स्यात् ॥
सालागकश्चान्यवरक्तियुक्तः संकीर्णकस्तूभयरक्तिहेतुः ॥
ध्वनेर्विशेषः स्वरवर्णभेदैर्विभूषितो यो जनरंजकः स्यात् ॥
रागो हि धीरैर्गदितोऽप्यनंता रागाश्च देशस्वरनामकाः स्युः ॥
रागे नु सप्तस्वरके भवंति पूर्वोदिताः सक्रमकूटतानाः ॥
नवाङ्कऋत्वग्निसचंद्रसंख्या रागे मताः षाडवतोऽपि तानाः ॥
षट्पंचरंध्रेन्दुमिताश्च तानाः स्युरौडवे मार्गणपक्षरामाः ॥

सकलस्वरमयं श्रीरुद्रवीणाप्रकारं ।
स्वरवररचनासद्रागमेलप्रभेदम् ॥
सुललितगतिनानारागलक्ष्मादिकं च ।
नरवरबुरहानः स्पष्टमेवं करोति ॥

इति श्रीकर्णाटकजातीयपुंडरीकविठ्ठलविरचिते सद्रागचंद्रोदये
स्वरमेलप्रसादो द्वितीयः ।

## अथ गमकालप्तिप्रकरणम् ।

कंपः स्वरे स्याद्गमको जनानामानंदकस्तस्य गदामि भेदान् ॥
तत्रादिमः स्यात्तिरिपाभिधानस्ततः परं स्यात्स्फुरिताह्वयश्च ॥
स्यात्कंपितो लीनकनामधेयश्चांदोलितश्चापि वलिस्त्रिभिन्नः ॥

ततः पुरस्तात् कुरुलाहताख्यावुल्लासितप्लावितहुंफिताश्च ॥
ततःपरं मुद्रितनामितौ च मिश्रश्च ते स्युः शरचंद्रसंख्याः ॥
लघिष्टकोच्चारमितो भवेद्यो ध्वानस्य कंपानुकृतेर्मनोज्ञः ॥
द्रुतस्य तुर्यांशकवेगयुक्तः स तु प्रणीतस्तिरिपाभिधानः ॥
तृतीयकांशप्रमितो द्रुतस्य वेगात्प्रदिष्टः स्फुरिताह्वयश्च ॥
द्रुतार्धमानाज्जववान्प्रयुक्तो यः कंपिताख्यो गमकः प्रसिद्धः ॥
लीनस्तु स स्याद्द्रुतमानवेगादांदोलितः स्याल्लघुवेगतोऽपि ॥
अनेकवक्रत्वयुतस्स्वरातः प्रयुज्यमानो वलिरेष उक्तः ॥
त्रिस्थानविश्रांतिविवर्जितो यस्त्रिभिन्ननामा निबिडस्वरश्च ॥
चेद्ग्रंथिलः कंठमृदुर्भवेच्च तदा वलिः स्यात्कुरुलाभिधानः ॥
स्वरं निहत्याग्रगतं निवृत्तो निगद्यते चाहतनामधेयः ॥
अथापरांस्तु क्रमतः स्वरान् यो व्रजेत्तमुल्लासितमामनंति ॥
यत्कंपनं स्यात् प्लुतमानवेगात्तं प्लावितं नाम वदंति तज्ज्ञाः ॥
यः स्याद्गभीरो हृदयंगमश्च हुंकारको हुंफितनामयुक्तः ॥
मुखस्य संमुद्रणसंभवो यो विधायते मुद्रितकस्वरः स्यात् ॥
स्यान्नामितोऽसौ नमनात्स्वराणामेतद्द्विदामिश्रणतोऽपि मिश्रः ॥
मिश्रस्य भेदा बहवो भवंति न वर्णिता विस्तरकातरेण॥

इति गमकभेदाः ॥

स्थायास्तु रागावयवाश्च सप्त त्वेते भवेयुर्भजनाश्रितास्तु ॥
ततो मताः स्थापनिकोपयाता गतिस्थिताः शब्दसमाश्रिताश्च ॥
ढालाश्रिता वाहनिकाश्रिताश्च छायागताश्चेत्यथ लक्षणानि ॥
विशिष्टमाधानमतिप्रयत्नाद्रागस्य चोक्तं भजनं तदा स्यात् ॥
स्थाया भवेयुर्भजनाश्रितास्ते संस्थाप्य संस्थाप्य कृतिस्तु तेषां ॥
लक्ष्ये तु रम्यानुपदं सुधीभिः स्थाया मताः स्थापनिकोपयाताः ॥
गतिस्तु गीतस्य विलासयुक्ता गजेंद्रवत्तत्सहिता गतिस्थाः ॥
स्निग्धत्वमाधुर्यसुमांसलाश्च ये मुक्तशब्दैः परिगृह्यमाणाः ॥
स्थायास्तु ते शब्दगता भवंति ढालस्तु मुक्ताफलवत्प्रचारः ॥

विलुंठनात्मा सहिता ह्यनेन स्थाया मता ढालसमाश्रितास्ते ॥
आरोहिगं चाप्यवरोहिसंस्थं संचारिनिष्ठं स्थिरकंपनं च ॥
सा गीयते वाहनिका तु तज्ज्ञैस्तदन्विता वाहनिकाश्रिताः स्युः ॥
छाया तु षोढा स्वररागरागांतरोत्थिता देशसमुद्भवा च ॥
क्षेत्रोद्भवा यंत्रसमुद्भवेति तल्लक्षणानि क्रमतो ब्रवीमि ॥
न्यूनाधिकत्वेन यदा श्रुतीनां स्वरांतरा स्यात्स्वरसंभवा सा ॥
छाया तु रागस्य निजैव या स्याद्रागोद्भवां तां निगदन्ति धीराः ॥
रागे तु रागांतरवद्भवेद्या गीयेत रागांतरसंभवा सा ॥
देशस्वभावादुदयं प्रपन्ना रागे भवेद्देशसमुद्भवा च ॥
वपुस्त्विति क्षेत्रमुदीर्यते तु क्षेत्रोदया क्षेत्रसमुत्थिता स्यात् ॥
या वंशयंत्रादिसमुद्भवा च निगद्यते यंत्रसमुत्थिताऽसौ ॥
स्थाया अमूभिः सहितास्तु गीताश्छायाश्रिता गीतविशेषविज्ञैः ॥

इति स्थायभेदाः ।

या वर्णकालंकरणैः प्रपन्ना स्थायैः सुकंपैरतिचित्रिता च ॥
मनोहरा स्याद्बहुभंगिभेदैरालप्तिरुच्येत तदा मुनींद्रैः ॥
यत्र ग्रहन्यासकयोश्च मंद्रापन्यासतारौडवषाडवानां ॥
पूर्णस्य मध्यांशकयोर्विवेको रागस्य चालाप इति प्रसिद्धः ॥
रूपप्रकाशीकरणं तयोश्च तदेव रागालपनं वदंति ॥
सा तु द्विधा रागनिबद्धकाभ्यां विशेषणाद्वच्मि तयोः प्रभेदम् ॥
या वर्तते वस्त्वनपेक्ष्य रागालप्तिर्निजस्थानचतुष्टयेन ॥
यत्र स्वरे रागनिवेशनं स्यात्स्थायीति नाम्ना मुनिभिः प्रणीतः ॥
द्व्यर्धस्तु तस्मादुदितस्तुरीयः स्यादष्टमस्तु द्विगुणाभिधानः ॥
यः पंचमः षष्ठकसप्तमौ च त्वर्धस्थिता इत्यभिधानकाः स्युः ॥
स्थायिस्वरादूर्ध्वगचालनेन द्व्यर्धादधोवर्तिनि चालनाद्वा ॥
स्थाय्यंतभूतो मुखचाल एषः स्वस्थानकं तत्प्रथमं वदंति ॥
द्व्यर्धस्वरे चालनतस्तदेव स्वस्थानकं तु प्रथितं द्वितीयम् ॥
अर्धस्थिते चालनतस्तृतीयं संचालनाच्च द्विगुणे चतुर्थम् ॥

स्वस्थानकैस्तैरिति सर्वरागालप्तिर्मता गानविशारदानाम् ॥
यदा पृथग्भूतविदारिकः स्यादालापकस्थाय इति प्रसिद्धः ॥
तालेन रागेण च वस्तुगेन निबद्धकालप्तिरियं भवेद्या ॥
सा तु प्रतिग्राहणिका तथान्या प्रभंजनीति द्विविधा भवेच्च ॥
आलप्तिका स्थायममुं विधाय निबद्धकम्यान्वयवान् गृहीत्वा ॥
यदा प्रतिग्राहणिका तदा स्यात्प्रभंजनी द्वैधमिति व्रजेच्च ॥
विदारिकाभागपदैर्यदिष्टैः स्थायस्थितिः स्याच्च निबद्धकेऽपि ॥
नानाप्रकारः क्रियते तदासौ तज्ज्ञैर्मता स्थायकभंजनी सा ॥
तेन प्रमाणेन च तैः पदैर्या त्वन्यैः प्रकारैरखिलं निबद्धम् ॥
गायेत्तदासावनिबद्धपूर्वा स्याद्भंजनी सा जनरंजनाय ॥
आमोदमंदं त्वधिकप्रसन्नैः स्थायैश्च सूक्ष्मैर्बहुभंगिभिश्च ॥
जीवस्वरव्याप्तिपरैस्तु पूर्वं रागस्य संस्थापनिका क्रियेत ॥

इत्यालप्तिप्रकरणम् ।

अथ वादनानि ।

अथो पुरा लक्षितवीणिकायां सर्वेषु देशीगतवस्तुकेषु ॥
रागेषु केषांचन वादनानि मुग्धावबोधार्थमुदीरयामि ॥
मंद्राश्रितो मध्यगतोऽपि मश्चेत्स्थायी विधीयेत परांस्ततस्त्रीन् ॥
आरुह्य पन्याह्वयषड्जकाख्यान्पंचावरुह्य क्रमतस्तु षड्जात् ॥
स्थायिस्वरांतानुपहन्यतेधः स्वस्थानमाद्यं त्विति मध्यमादेः ॥
द्व्यर्धाख्यमर्धस्थितनामधेयमारुह्य तद्वद्द्विगुणाभिधानम् ॥
आद्यं निजस्थानकमभ्युपैति स्वस्थानकानां त्रितयं परं स्यात् ॥
स्वरं समारोहति च क्रमेण स्यात्सर्वरागेषु निधानमेतत् ॥

इति मध्यमादिः ।

मंद्रस्थितान्निग्रहतः प्रयुज्य परं ततः प्राप्य तृतीयतुर्यौ ॥
उपेत्य च स्थायितृतीयकं च स्थायिस्वरात्तुर्यमथ प्रपद्य ॥
ततः स्वरानप्यवरुह्य पंच स्थायिस्वराधस्तनतुर्यमेत्य ॥
कृत्वा ततः स्थायिपुरःस्थितं च गत्वा स्वरं स्थायिनमग्रगं तु ॥

स्थायिस्वरात्तुर्यमथ प्रपद्य ग्रहस्वरादग्रगतं विहाय ॥
न्यासो विधीयेत यदा ग्रहाख्ये तदा भवेन्मालवगौडनामा ॥
इति मालवगौडः ।

चेद्धैवतं स्थायितया प्रपद्य ततस्तृतीयं च चतुर्थकं च ॥
स्थायिस्वरांतानवरुह्य तत्राधोवर्तमानं तु तुरीयमेत्य ॥
स्थायिस्वरं याति यदा तदानीं रागो भवेद्भैरवनामधेयः ॥
इति भैरवः ।

षड्जं विधाय द्विगुणं ग्रहाख्यमधस्तनं स्थायिनमप्युपेत्य ॥
द्वितीयकं तुर्यमथ प्रयुज्य द्वितीयकं स्थायिनमास्पृशेच्च ॥
नीते विलंबित्वमपि द्वितीये श्रीरागकः स्थायिविमोचनात्स्यात् ॥
इति श्रीरागः ।

मध्यस्थषड्जग्रहतस्तृतीयं यदा समाश्रित्य चतुर्थकं तु ॥
उक्त्वा द्वितीयं तु तृतीयकं च स्पृष्ट्वा स्वरौ तुर्यकपंचमौ च ॥
एतत्क्रमेणाप्यवरोह इष्टः स्थायिद्वितीयं च विनापि तुर्यं ॥
ततस्तृतीयं समुदीर्य मुक्तिर्ग्रहे तु धन्नास्यभिधः प्रसिद्धः ॥
इति धन्नासी ।

चेद्धैवतं स्थायिपरं विलंब्य स्पृष्ट्वा ग्रहाख्यं च तथा द्वितीयम् ॥
ईषद्विलंब्य ग्रहपूर्वसंस्थं तृतीयमारुह्य तथा ग्रहाद्यौ ॥
स्वरौ तृतीयं सुविलंब्य तस्याधस्थग्रहात्स्पर्शनमात्रतस्त्रीन् ॥
आरुह्य संस्पृश्य तथा ग्रहाख्यं स्वरं द्वितीयं समुपेत्य कुर्यात् ॥
ग्रहाभिधाने न्यसनं तदानीमुपेत्य मल्लारकनामधेयः ॥
इति मल्लारः ।

मध्यस्थसं स्थायितया विधाय समेत्य तस्मादधरस्वरौ च ॥
स्थायिस्वरात् त्रीनपि वादयित्वा वेगेनचैतानवरुह्य तद्वत् ॥
ग्रहस्वरेंऽतः क्रियते यदा तु तदोपजायेत वसंतनामा ॥
इति वसंतः ।

सस्थायिनं पूर्वगतस्वरं चेद्गत्वा समारोहति पंच तस्मात् ॥
तुर्यं द्वितीयं द्विरुदीर्य मुक्तिः स्थायिन्युपेयाज्जननं वराटी ॥
इति वराटी ।

मध्यस्थषड्जग्रहपूर्वभूतं कृत्वा परौ तुर्यमथो विलंब्य ॥
द्वितीयमास्पृश्य तथा तृतीयं मुक्तौ ग्रहे रामकृतिर्विशुद्धा ॥
इति शुद्धरामक्रीः ॥

इति वादनानि ।

रागाः कियंतः कथिता मयैवं निबध्नतानुग्रहमर्भकेषु ॥
यद्बोधतोऽधीतसुरागतायां सिद्धिं सुधीराः प्रतिपादयेयुः ॥
नरपतिबुरहानो रागविद्याविवेकी
गमकगतिविभेदस्थायकानां प्रभेदम् ॥
सकलजनविपंची रागकाद्यं प्रकारं
गुणिजनमवबोद्धुं चात्र योग्यं करोतु ॥
इति श्रीविठ्ठलादिष्टः प्रसादत्रयसुंदरः ॥
रागचंद्रोदयो भाति जनाज्ञानतमोहरः ॥
विद्वज्जनचकोरा ये रागचंद्रोदयं मम ॥
विलसंतं सुपश्यंतु नादपीयूषकांक्षिणः ॥
वरबुरहृदिजाते रागचंद्रे प्रसन्ने
भ्रमतिमिरविशेषो नाशमायात्यशेषम् ॥
इति मनसि विचिंत्य प्रायशो यः पठेद्‌-
भ्दवति सकलपृथ्वीरागिणां रागसिद्धिः ॥
कर्णाटे शैवगंगाभिधनगनिकटे सातनूर्वाह्वयो यो
ग्रामस्तत्राग्रजन्मप्रवरसुनिकराज्जामदग्न्योऽस्ति वंशः ॥
तत्र श्रीविठ्ठलार्योऽभवदमितयशास्तद्गुणाख्या तु तस्यै-
तत्सूनो रागचंद्रोदय इति च भजन्कैरवाणां मुदेऽस्तु ॥

इति श्रीकर्णाटजातीयपुंडरीकविठ्ठलविरचिते सद्राग-
चंद्रोदये आलप्तिप्रसादस्तृतीयः ।

समाप्तोऽयं रागचंद्रोदयो ग्रंथः ॥